२५. न स्त्रीप्रत्यये चानुपसर्जने ।

२६. संज्ञाविधौ प्रत्ययग्रहणे तदन्तविधिर्नास्ति ।

२७. प्रातिपदिकग्रहणे लिङ्गविशिष्टस्यापि ग्रहणम् ।

२८. विभक्तौ लिङ्गविशिष्टाग्रहणम् ।

२९. सूत्रे लिङ्गवचनमतन्त्रम् ।

३०. नञिवयुक्तमन्यसदृशाधिकरणे तथा ह्यर्थः ।

३१. गतिकारकोपपदानां कृद्भिः समासवचनं प्राक्सुबुत्पत्तेः ।

३२. क्वचिदपवादविषयेऽप्युत्सर्गोऽभिनिविशते ।

३३. अन्तरङ्गानपि विधीन बहिरङ्गो ल्यब्बाधते ।

३४. असति सम्भवे बाधनं भवति अस्ति च सम्भवे यदुभयं स्यात् ।

३५. क्तल्युट्तुमुन्खलर्थेषु वाऽसरूपविधिर्नास्ति ।

३६. नानुबन्धकृतमसारूप्यम् ।

३७. लक्षणप्रतिपदोक्तयोः प्रतिपदोक्तस्यैव ग्रहणं न तु लाक्षणिकस्य ।

३८. एकदेशविकृतमनन्यवत् ।

३९. क्वचिद्विकृतिरपि प्रकृतिं गृह्णाति ।

४०. बहुव्रीहौ तद्गुणसंविज्ञानमपि ।

४१. पुरस्तादपवादा अनन्तरान् विधीन् बाधन्ते नोत्तरान् ।

४२. नानुबन्धकृतमनेजन्तत्वम् ।

४३. चानुकृष्टं नोत्तरत्र ।

४४. मध्येऽपवादाः पूर्वान् विधीन् बाधन्ते नोत्तरान् ।

४५. अकृतव्यूहाः पाणिनीयाः कृतमपि शास्त्रं निवर्त्तयन्ति ।

४६. निरनुबन्धकग्रहणे न सानुबन्धकस्य ।

४७. एकानुबन्धकग्रहणे न द्व्यनुबन्धकस्य ।

४८. तदनुबन्धकग्रहणे नातदनुबन्धकस्य ।

४९. स्वरविधौ व्यञ्जनमविद्यमानवत् ।

५०. क्रियाविशेषणानां कर्मत्वं नपुंसकलिङ्गता च ।

५१. ग्रहणवता प्रातिपदिकेन तदन्तविधिर्नास्ति ।

५२. व्यपदेशिवद्भावोऽप्रातिपदिकेन ।

५३. स्वार्थिकाः प्रकृतितो लिङ्गवचनान्यतिवर्त्तन्तेऽपि ।

५४. सम्प्रसारणं सम्प्रसारणाश्रयं च कार्यं बलीयो भवति ।

५५. उभयत आश्रये नान्तादिवत् ।

५६. सन्निपातलक्षणो विधिरनिमित्तं तद्विघातस्य ।

५७. अनिनस्मन्ग्रहणान्यर्थवता चानर्थकेन च तदन्तविधिं प्रयोजयन्ति ।

५८. वार्णादाङ्गं बलीयः ।

५९. यो ह्यनादिष्टादचः पूर्वस्तस्य विधिं प्रति स्थानिवत् ।

६०. प्रकृतिग्रहणे यङ्लुगन्तस्यापि ग्रहणम् ।

६१. असिद्धं बहिरङ्गमन्तरङ्गे ।

६२. नाजानन्तर्ये बहिष्ट्वप्रक्लृप्तिः ।

६३. सन्नियोगशिष्टानामन्यतरापाये उभयोरप्यपायः ।

६४. धातोः कार्यमुच्यमानं तत्प्रत्यय एव भवति ।

६५. तन्मध्यपतितस्तद्ग्रहणेन गृह्यते ।

६६. अबाधकान्यपि निपातनानि भवन्ति ।

६७. क्वचित्समुदायेन वाक्यपरिसमाप्तिः ।

६८. अभेदका इह शास्त्रे गुणाः ।

६९. सर्वविधिभ्य इड्विधिर्बलीयान् ।

७०. लुग्विकरणालुग्विकरणयोरलुग्विकरणस्यैव ग्रहणम् ।

७१. तस्यैवप्रवृत्त्येह कार्याणि क्रियन्ते ।

७२. अन्तरङ्गानपि विधीन् बहिरङ्गो लुग्बाधते ।

७३. पर्जन्यवल्लक्षणप्रवृत्तिः ।

७४. गर्भवद्भावादयो भवन्ति ।

७५. विधौ परिभाषोपतिष्ठते नानुवादे ।

७६. प्रकृतिग्रहणे ण्यधिकस्यापि ग्रहणं भवति ।

७७. अङ्गवृत्तेः पुनरङ्गवृत्तावविधिर्निष्ठितस्य ।

७८. पूर्वत्रासिद्धीये न स्थानिवत् ।

७९. उपजातनिमित्तोऽप्युत्सर्ग उपजनिष्यमाणनिमित्तेनापवादेन बाध्यते ।

८०. परिहृत्यापवादविषयमुत्सर्गोऽभिनिविशते ।

८१. णौ कृतं स्थानिवत् ।

८२. अभ्यासविकारेष्वपवादा नोत्सर्गान् विधीन् बाधन्ते ।

८३. पूर्वत्रासिद्धीयमद्विर्वचने ।

८४. आगमशासनमनित्यम् ।

८५. गौणमुख्ययोर्मुख्ये कार्यसम्प्रत्ययः ।

८६. प्रधानाप्रधानयोः प्रधाने कार्यसम्प्रत्ययः ।

८७. गामादाग्रहणेष्वविशेषः ।

८८. सामान्यस्यातिदेशे विशेष-स्यानतिदेशः ।
८९. श्रुतानुमितयोः श्रौतः सम्बन्धो बलीयान् ।
९०. विधिनियमसम्भवे विधिरेव ज्यायान ।
९१. प्रतिपदविधानाद्योगविभागो गरीयान् ।
९२. अनन्त्यविकारेऽन्त्यसदेशस्य ।
९३. नानर्थकेलोऽन्त्यविधिः ।
९४. सहचरितासहचरितयोः सहचरितस्यैव ग्रहणम् ।
९५. गणकार्यमनित्यम् ।
९६. अनिर्दिष्टार्थाः प्रत्ययाः स्वार्थे भवन्ति ।
९७. पूर्वं धातुः साधनेन युज्यते पश्चादुपसर्गेण ।

इति श्रीमानशर्मव्याख्याताः परिभाषाः ।

---:०:---

## १६. नीलकण्ठदीक्षितव्याख्याताः परिभाषाः

१. व्याख्यानतो विशेषप्रतिपत्तिर्न हि सन्देहादलक्षणम् ।
२. न हि कार्यी निमित्तत्वेना-श्रीयते ।
३. इतरेतराश्रयाणि च कार्याणि प्रकल्पन्ते ।
४. यदागमास्तद्गुणीभूतास्तद्-ग्रहणेन गृह्यन्ते ।
५. निर्दिश्यमानस्यादेशा भवन्ति ।
६. नानुबन्धकृतमनेकाल्त्वम् ।
७. नानुबन्धकृतमनेजन्तत्वम् ।
८. नानुबन्धकृतमसारूप्यम् ।
९. वर्णाश्रये नास्ति प्रत्यय-लक्षणम् ।
१०. क्वचिदेकदेशोऽप्यनुवर्त्तते ।
११. अर्थवद्ग्रहणे नानर्थकस्य ।
१२. न वर्णग्रहणेषु ।
१३. अलैवानर्थकेन तदन्तविधिः ।
१४. गौणमुख्ययोर्मुख्ये कार्य-सम्प्रत्ययः ।
१५. अनिनस्मन्ग्रहणान्यर्थवता चानर्थकेन च तन्तविधिं प्रयोजयन्ति ।
१६. भाव्यमानोऽण् सवर्णान् न गृह्णाति ।
१७. यस्मिन्विधिस्तदादावल्ग्रहणे ।
१८. विधिविधानविधिभाजां त्रयाणां सन्निधाने तदन्त-विधिर्भवति ।
१९. एकयोगनिर्दिष्टानां सह वा प्रवृत्तिः सह वा निवृत्तिः ।
२०. उणादयोऽव्युत्पन्नानि प्राति-पदिकानि ।
२१. उणादयो व्युत्पन्नान्यपि ।
२२. सर्वो द्वन्द्वो विभाषयैक-वद्भवति ।
२३. प्रकृतिवदनुकरणं भवति ।
२४. विकरणेभ्यो नियमो बलीयान् ।
२५. सकृद्गतौ विप्रतिषेधे यद्बाधितं तद्बाधितमेव ।
२६. पुनःप्रसङ्गविज्ञानात्सिद्धम् ।
२७. अन्तरङ्गबहिरङ्गयोरन्तरङ्गं बलीयः ।
२८. पूर्वं धातुरुपसर्गेण युज्यते पश्चात्साधनेन ।
२९. पूर्वं धातुः साधनेन युज्यते पश्चादुपसर्गेण ।
३०. सर्वे विधयश्छन्दसि विकल्प्यन्ते ।
३१. प्रत्ययग्रहणे यस्मात्स विहित-दादेस्तदन्तस्य ग्रहणम् ।
३२. प्रत्ययग्रहणे चापञ्चम्याः ।
३३. स्त्रीप्रत्यये चानुपसर्जने न ।
३४. संज्ञाविधौ प्रत्ययग्रहणे तदन्तग्रहणं नास्ति ।
३५. कृद्ग्रहणे गतिकारकपूर्वस्यापि ग्रहणम् ।

३६. पदाङ्गाधिकारे तस्य च तदन्तस्य च ।
३७. उभयनिर्देशे पञ्चमीनिर्देशो बलीयान् ।
३८. प्रातिपदिकग्रहणे लिङ्गविशिष्टस्यापि ग्रहणम् ।
३९. विभक्तौ लिङ्गविशिष्टाग्रहणम् ।
४०. लिङ्गवचनमतन्त्रम् ।
४१. नञिवयुक्तमन्यसदृशाधिकरणे तथा ह्यर्थगतिः ।
४२. गतिकारकोपपदानां कृद्भिः सह समासवचनं प्राक्सुबुत्पत्तेः ।
४३. परिहृत्यापवादविषयमुत्सर्गोऽभिनिविशते ।
४४. क्वचिदपवादविषयेऽप्युत्सर्गोऽभिनिविशते ।
४५. असतिसम्भवे बाधनं भवति ।
४६. अस्ति च सम्भवो यदुभयं स्यात् ।
४७. सत्यपि सम्भवे बाधनं भवति ।
४८. येन नाप्राप्ते यो विधिरारभ्यते स तस्य बाधको भवति ।
४९. पुरस्तादपवादा अनन्तरान् विधीन् बाधन्ते नोत्तरान् ।
५०. मध्येऽपवादाः पूर्वान् विधीन् बाधन्ते नोत्तरान् ।
५१. अनन्तरस्य विधिर्वा भवति प्रतिषेधो वा ।
५२. अभ्यासविकारेषु बाध्यबाधकभावो नास्ति ।
५३. ताच्छीलिकेषु वासरूपविधिर्नास्ति ।
५४. क्तल्युट्तुमुन्खलर्थेषु वासरूपविधिर्नास्ति ।
५५. सांप्रतिकाभावे भूतपूर्वगतिः ।
५६. भवति हि बहुव्रीहौ तद्गुणसंविज्ञानमपि ।
५७. चानुकृष्टं नोत्तरत्र ।
५८. असिद्धं बहिरङ्गमन्तरङ्गे ।
५९. नाजानन्तर्ये बहिष्ट्वप्रक्लृप्तिः ।
६०. वार्णादाङ्गं बलीयः ।
६१. अकृतव्यूहाः पाणिनीयाः ।
६२. अन्तरङ्गानपि विधीन् बहिरङ्गो ल्यब्बाधते ।
६३. अन्तरङ्गानपि विधीन् बहिरङ्गो लुग्बाधते ।
६४. निमित्तापाये नैमित्तिकस्याप्यपायः ।
६५. कृतमपि निवर्त्तयन्ति ।
६६. उपजनिष्यमाणनिमित्तोऽप्यपवाद उपजातनिमित्तमप्युत्सर्गं बाधते ।
६७. स्वरविधौ व्यञ्जनमविद्यमानवत् ।
६८. हल्स्वरप्राप्तौ व्यञ्जनमविद्यमानवत् ।
६९. निरनुबन्धकग्रहणे न सानुबन्धकस्य ।
७०. तदनुबन्धकग्रहणे नातदनुबन्धकस्य ।
७१. ग्रहणवता प्रातिपदिकेन तदन्तविधिर्नास्ति ।
७२. व्यपदेशिवद्भावोऽप्रातिपदिकेन ।
७३. स्वार्थिकाः प्रत्ययाः प्रकृतितो लिङ्गवचनान्यतिवर्त्तन्ते ।
७४. समासान्तविधिरनित्यः ।
७५. सन्निपातलक्षणो विधिरनिमित्तं तद्विघातस्य ।
७६. प्रकृतिग्रहणे यङ्लुगन्तस्य ग्रहणम् ।
७७. सन्नियोगशिष्टानामन्यतरापाये उभयोरप्यपायः ।
७८. संज्ञापूर्वको विधिरनित्यः ।
७९. ताच्छीलिकेष्वण्कृतं भवति ।
८०. धातोः स्वरूपग्रहणे तत्प्रत्यये कार्यविज्ञानम् ।
८१. तन्मध्यपतितस्तद्ग्रहणेन गृह्यते ।
८२. तदेकदेशस्तद्ग्रहणे गृह्यते ।
८३. लुग्विकरणालुग्विकरणयोरलुग्विकरणस्यैव ग्रहणम् ।
८४. विधौ परिभाषोपतिष्ठते नानुवादे ।
८५. प्रकृतिग्रहणे ण्यधिकस्य ग्रहणम् ।
८६. अङ्गवृत्ते पुनर्वृत्तावविधिः ।
८७. आगमशास्त्रमनित्यम् ।
८८. कृत्रिमाकृत्रिमयोः कृत्रिमे कार्यसम्प्रत्ययः ।
८९. प्रधानाप्रधानयोः प्रधाने कार्यसम्प्रत्ययः ।
९०. उपपदविभक्तेः कारकविभक्तिर्बलीयसी ।
९१. अवयवप्रसिद्धेः समुदायप्रसिद्धिर्बलीयसी ।
९२. गणकार्यमनित्यम् ।
९३. व्यवस्थितविभाषयापि कार्याणि क्रियन्ते ।
९४. अनन्त्यविकारेऽन्त्यसदेशस्य ।
९५. नानर्थकेऽलोन्त्यविधिरनभ्यासविकारे ।
९६. विधिनियमसम्भवे विधिरेव ज्यायान् ।
९७. सामान्यातिदेशे विशेषानतिदेशः ।
९८. प्रत्ययाप्रत्यययोः प्रत्ययस्यैव ग्रहणम् ।
९९. सहचरितासहचरितयोः सहचरितस्यैव ग्रहणम् ।

१००. श्रुतानुमितयोः श्रुतसम्बन्धो बलीयान् ।
१०१. श्रुतानुमितयोः श्रुतेनैव सम्बन्धः ।
१०२. लक्षणप्रतिपदोक्तयोः प्रतिपदोक्तस्यैव ग्रहणम् ।
१०३. गामादाग्रहणेष्वविशेषः ।
१०४. प्रत्येकं वाक्यपरिसमाप्तिः ।
१०५. क्वचित्समुदायेऽपि ।
१०६. उभयथापि वाक्यपरिसमाप्तिः ।
१०७. अभेदका गुणाः ।
१०८. पदाङ्गाधिकारे तस्य च तदन्तस्य च ।
१०९. बाधकान्येव निपातनानि ।
११०. अबाधकान्यपि निपातनानि ।
१११. पर्जन्यवल्लक्षणप्रवृत्तिः ।
११२. लक्ष्ये लक्षणस्य सकृदेव प्रवृत्तिः ।
११३. निषेधाश्च बलीयांसो भवन्ति ।
११४. अनिर्दिष्टार्थाः प्रत्ययाः स्वार्थे ।
११५. योगविभागादिष्टसिद्धिः ।
११६. पर्यायशब्दानां गुरुलाघवचर्चा नाद्रियते ।
११७. यथोद्देशं संज्ञापरिभाषम् ।
११८. कार्यकालं संज्ञापरिभाषम् ।
११९. ज्ञापकसिद्धं न सर्वत्र ।
१२०. उभयत आश्रयणे नान्तादिवत् ।
१२१. समासप्रत्ययविधौ प्रतिषेधः ।
१२२. उगिद्वर्णग्रहणवर्जम् ।
१२३. वर्णाश्रये नान्तादिवत् ।
१२४. यो ह्यनादिष्टादचः पूर्वस्तस्य विधिं प्रति स्थानिवद्भावः ।
१२५. एकदेशविकृतमनन्यवद्भवति ।
१२६. पूर्वत्रासिद्धीयमद्विर्वचने ।
१२७. णौ कृतं द्वित्वे न स्थानिवत् ।
१२८. पूर्वत्रासिद्धीये न स्थानिवत् ।
१२९. सन्वेहे बहुवचनं प्रयोक्तव्यम् ।
१३०. पिरस्वरादिचित्स्वरो बलीयान् ।
१३१. उदित् सवर्णं गृह्णाति ।
१३२. क्वचिद्विकृतिरपि प्रकृतिं गृह्णाति ।
१३३. सम्प्रसारणं तदाश्रयं च कार्यं बलवत् ।
१३४. क्रियाविशेषणानां कर्मत्वमेकत्वं क्लीबत्वं च ।
१३५. औपदेशिकप्रायोगिकयोरौपदेशिकस्यैव ग्रहणम् ।
१३६. सर्वविधिभ्य इड्विधिर्बलीयान् ।
१३७. सर्वविधिभ्यो लोपविधिर्बलीयान् ।
१३८. प्रतिपदविधानाद्योगविभागो गरीयान् ।
१३९. गर्भवद्दाद्यो भवन्ति ।
१४०. वस्त्यंप्रवृत्त्येह कार्याणि क्रियन्ते ।

इति नीलकण्ठदीक्षितव्याख्याताः परिभाषाः ।

--:०:--

## १६. हरिभास्कराग्निहोत्रिव्याख्याताः परिभाषाः ।

१. व्याख्यानतो विशेषप्रतिपत्तिर्न हि सन्देहादलक्षणम् ।
२. न हि कार्यी निमित्ततयाश्रीयते ।
३. इतरेतराश्रयाणि कार्याणि शास्त्रे प्रकल्पन्ते ।
४. आगमास्तद्गुणीभूतास्तद्ग्रहणेन गृह्यन्ते ।
५. निर्दिश्यमानस्यादेशा भवन्ति ।
६. नानुबन्धकृतमनेकाल्त्वम् ।
७. वर्णाश्रये नास्ति प्रत्ययलक्षणम् ।
८. क्वचिदेकदेशोऽप्यनुवर्तते ।
९. अर्थवद्ग्रहणे नानर्थकस्य ग्रहणम् ।
१०. न वर्णग्रहणेषु ।
११. भाव्यमानोऽण् सवर्णान्न गृह्णाति ।
१२. यस्मिन्विधिस्तदादावल्ग्रहणे ।
१३. विधिविधानविधिभाजां त्रयाणां सन्निपातेन तदन्तविधिः ।
१४. सन्नियोगशिष्टानां सह वा प्रवृत्तिः सह वा निवृत्तिः ।
१५. उणादयोऽव्युत्पन्नानि प्रातिपदिकानि ।
१६. सर्वो द्वन्द्वो विभाषैकवद्भवति ।
१७. उदित् सवर्णं गृह्णाति, न सवर्णमात्रम् ।
१८. प्रकृतिवदनुकरणं भवति ।
१९. विकरणेभ्यो नियमो बलीयान् ।
२०. सकृद्गतौ विप्रतिषेधे यद्बाधितं तद्बाधितमेव ।
२१. पुनःप्रसङ्गविज्ञानात् सिद्धम् ।
२२. अन्तरङ्गबहिरङ्गयोरन्तरङ्गं बलवत् ।
२३. उभयनिर्देशे पञ्चमीनिर्देशो बलीयान् ।
२४. सर्वे विधयश्छन्दसि विकल्पन्ते ।
२५. प्रत्ययग्रहणे यस्मात्स विहितस्तदादेस्तदन्तस्य ग्रहणम् ।
२६. स्त्रीप्रत्यये चानुपसर्जने न ।
२७. संज्ञाविधौ प्रत्ययग्रहणे तदन्तग्रहणं नास्ति ।
२८. प्रातिपदिकग्रहणे लिङ्गविशिष्टस्यापि ग्रहणम् ।
२९. विभक्तौ लिङ्गविशिष्टाग्रहणम् ।
३०. सूत्रे लिङ्गवचनमतन्त्रम् ।
३१. नञिवयुक्तमन्यसदृशाधिकरणे तथा ह्यर्थगतिः ।
३२. गतिकारकोपपदानां कृद्भिः सह समासवचनं प्राक्सुबुत्पत्तेः ।
३३. क्वचिदपवादविषयेऽप्युत्सर्गोऽभिनिविशते ।
३४. अन्तरङ्गानपि विधीन् बहिरङ्गो ल्यब्बाधते ।
३५. समासश्च द्विपदाश्रयत्वाद्बहिरङ्गोऽपि ल्यपं बाधते ।
३६. असति सम्भवे बाधनं भवति ।
३७. अस्ति च सम्भवो यदुभयं स्यात् ।
३८. क्तल्युट्तुमुन्खलर्थेषु वासरूपविधिर्नास्ति ।
३९. साम्प्रतिकाभावे भूतपूर्वगतिः ।
४०. नानुबन्धकृतमसारूप्यम् ।
४१. लक्षणप्रतिपदोक्तयोः प्रतिपदोक्तस्यैव ग्रहणं न तु लाक्षणिकस्य ।
४२. एकदेशविकृतमनन्यवत् ।
४३. क्वचिद्विकृतिरपि प्रकृतिं गृह्णाति ।
४४. बहुव्रीहौ तद्गुणसंविज्ञानमपि ।
४५. ताच्छीलिकेषु वासरूपविधिर्नास्ति ।

४६. पुरस्तादपवादा अनन्तरान् विधीन् बाधन्ते नोत्तरान् ।
४७. नानुबन्धकृतमनेजन्तत्वम् ।
४८. चानुकृष्टं नोत्तरत्र ।
४९. मध्येऽपवादाः पूर्वान् विधीन् बाधन्ते नोत्तरान् ।
५०. अनन्तरस्य विधिर्वा प्रतिषेधो वा ।
५१. अकृतव्यूहाः पाणिनीयाः ।
५२. निरनुबन्धकग्रहणे न सानुबन्धकस्य ग्रहणम् ।
५३. एकानुबन्धकग्रहणे न द्व्यनुबन्धकस्य ।
५४. तदनुबन्धकग्रहणे नातदनुबन्धकस्य ।
५५. स्वरविधौ व्यञ्जनमविद्यमानवत् ।
५६. क्रियाविशेषणानां कर्मत्वं नपुंसकलिङ्गता च ।
५७. ग्रहणवता प्रातिपदिकेन तदन्तविधिर्नास्ति ।
५८. व्यपदेशिवद्भावोऽप्रातिपदिकेन ।
५९. समासप्रत्ययविधौ प्रतिषेध उगिद्वर्णग्रहणवर्जम् ।
६०. स्वार्थिकाः प्रकृतितो लिङ्गवचनान्यतिवर्तन्ते ।
६१. सम्प्रसारणं सम्प्रसारणाश्रयं च कार्यं बलीयो भवति ।
६२. उभयत आश्रये नान्तादिवत् ।
६३. वर्णाश्रये विधौ नान्तादिवत् ।
६४. कृद्ग्रहणे गतिकारकपूर्वस्यापि ग्रहणम् ।
६५. समासान्तविधिरनित्यः ।
६६. सन्निपातलक्षणो विधिरनिमित्तं तद्विघातस्य ।
६७. अनिनस्मन्ग्रहणान्यर्थवता चानर्थकेन च तदन्तविधिं प्रयोजयन्ति ।
६८. वार्णादाङ्गं बलीयः ।
६९. यो ह्यनादिष्टादचः पूर्वस्तस्य विधिं प्रति स्थानिवद्भावः ।
७०. प्रकृतिग्रहणे यङ्लुगन्तस्य ग्रहणम् ।
७१. असिद्धं बहिरङ्गमन्तरङ्गे ।
७२. नाजानन्तर्ये बहिष्ट्वप्रक्लृप्तिः ।
७३. संज्ञापूर्वको विधिरनित्यः ।
७४. सन्नियोगशिष्टानामन्यतरापाये उभयोरप्यपायः ।
७५. ताच्छीलिके णेऽण्कृतं कार्यं भवति ।
७६. धातोः कार्यमुच्यमानं तत्प्रत्यय एव भवति ।
७७. तन्मध्यपतितस्तद्ग्रहणेन गृह्यते ।
७८. अबाधकान्यपि निपातनानि भवन्ति ।
७९. अङ्गाधिकारे तस्य तदुत्तरपदस्य च ।
८०. प्रत्येकं वाक्यपरिसमाप्तिः ।
८१. वर्णाचरसमुदाये वाक्यपरिसमाप्तिः ।
८२. क्वचिदुभयथा वाक्यपरिसमाप्तिः ।
८३. अभेदका इह गुणाः ।
८४. औपदेशिकप्रायोगिकयोरौपदेशिकस्यैव ग्रहणम् ।
८५. सर्वविधिभ्यो लुग्विधिर्बलीयान् ।
८६. लुग्विकरणालुग्विकरणयोरलुग्विकरणस्यैव ग्रहणम् ।
८७. वस्त्वर्थप्रवृत्त्येह कार्याणि क्रियन्ते ।
८८. अन्तरङ्गानपि विधीन् बहिरङ्गो लुग्बाधते ।
८९. सत्यपि सम्भवे बाधनं भवति ।
९०. पर्जन्यवल्लक्षणप्रवृत्तिः ।
९१. गर्भवद्बाधका भवन्ति ।
९२. विधौ परिभाषोपतिष्ठते नानुवादे ।
९३. प्रकृतिग्रहणे ण्यधिकस्यापि ग्रहणम् ।
९४. अङ्गवृत्ते पुनर्वृत्तावविधिः ।
९५. पूर्वत्रासिद्धीये न स्थानिवत् ।
९६. उपजातनिमित्तोऽप्युत्सर्ग उपजनिष्यमाणनिमित्तेनापवादेन बाध्यते ।
९७. णौ कृतं स्थानिवत् ।
९८. अभ्यासविकारेष्वपवादा नोत्सर्गान् विधीन् बाधन्ते ।
९९. पूर्वत्रासिद्धीयमद्विर्वचने ।
१००. अनित्यमागमशासनम् ।
१०१. निमित्तापाये नैमित्तिकस्याप्यपायः ।
१०२. गौणमुख्ययोर्मुख्ये कार्यसम्प्रत्ययः ।
१०३. कृत्रिमाकृत्रिमयोः कृत्रिमे कार्यसम्प्रत्ययः ।
१०४. प्रधानाप्रधानयोः प्रधाने कार्यसम्प्रत्ययः ।
१०५. उपपदविभक्तेः कारकविभक्तिर्बलीयसी ।
१०६. अवयवप्रसिद्धेः समुदायप्रसिद्धिर्बलीयसी ।
१०७. गामादाग्रहणेष्वविशेषः ।
१०८. सामान्यातिदेशे विशेषस्यानतिदेशः ।
१०९. श्रुतानुमितयोः श्रुतसम्बन्धो बलीयान् ।
११०. पित्स्वराच्चित्स्वरो बलीयान् ।
१११. विधिनियमसम्भवे विधिरेव ज्यायान् ।

११२. प्रतिपदविधानाद्योगविभागो गरीयान् ।

११३. सर्वविधिभ्यो लोपविधिर्बलवान् ।

११४. अनभ्यासविकारे अभ्यासदेशस्य ।

११५. नानर्थकेऽलोऽन्त्यविधिरनभ्यासविकारे ।

११६. प्रत्ययाप्रत्यययोः प्रत्ययस्यैव ग्रहणम् ।

११७. सहचरितासहचरितयोः सहचरितस्यैव ग्रहणम् ।

११८. यथोद्देशं संज्ञापरिभाषम् ।

११९. कार्यकालं संज्ञापरिभाषम् ।

१२०. गणकार्यमनित्यम् ।

१२१. सन्देहे बहुवचनं प्रयोक्तव्यम् ।

१२२. अर्थवशाद्विपरिणामः ।

१२३. योगविभागादिष्टसिद्धिः ।

१२४. पर्यायशब्दानां गुरुलाघवचर्चा नाद्रियते ।

१२५. व्यवस्थितविभाषयाऽपि कार्याणि क्रियन्ते ।

१२६. भावाभावात्मको हि विकल्पः ।

१२७. अनिर्दिष्टार्थाः प्रत्ययाः स्वार्थे भवन्ति ।

१२८. अन्वर्था हि प्रत्ययसंज्ञा ।

१२९. ज्ञापकसिद्धं न सर्वत्र ।

१३०. युगपदधिकरणवचने द्वन्द्वः ।

१३१. पूर्वं धातुः साधनेन युज्यते पश्चादुपसर्गेण ।

१३२. समासकृत्तद्धितेषु सम्बन्धाभिधानं भावप्रत्ययेन अन्यत्र रूढ्यभिन्नरूपाव्यभिचारिसम्बन्धेभ्यः ।

इति हरिभास्कराग्निहोत्रिव्याख्याताः परिभाषाः ।

--:o:--

## १७. नागेशभट्टविरचितपरिभाषेन्दुशेखरस्थपरिभाषाः ।

१. व्याख्यानतो विशेषप्रतिपत्तिर्न हि सन्देहादलक्षणम् ।

२. यथोद्देशं संज्ञापरिभाषम् ।

३. कार्यकालं संज्ञापरिभाषम् ।

४. अनेकान्ता अनुबन्धा इति ।

५. एकान्ताः ।

६. नानुबन्धकृतमनेकाल्त्वम् ।

७. नानुबन्धकृतमनेजन्तत्वम् ।

८. नानुबन्धकृतमसारूप्यम् ।

९. उभयगतिरिह भवति ।

१०. कार्यमनुभवन् हि कार्यी निमित्ततया नाश्रीयते ।

११. यदागमास्तद्गुणीभूतास्तद्ग्रहणेन गृह्यन्ते ।

१२. निर्दिश्यमानस्यादेशा भवन्ति ।

१३. यत्रानेकविधमान्तर्यं तत्र स्थानत आन्तर्यं बलीयः ।

१४. अर्थवद्ग्रहणे नानर्थकस्य ।

१५. गौणमुख्ययोर्मुख्ये कार्यसम्प्रत्ययः ।

१६. अनिनस्मन्ग्रहणान्यर्थवता चानर्थकेन तदन्तविधिं प्रयोजयन्ति ।

१७. एकयोगनिर्दिष्टानां सह वा प्रवृत्तिः सह वा निवृत्तिः ।

१८. क्वचिदेकदेशोऽप्यनुवर्तते ।

१९. भाव्यमानेन सवर्णानां ग्रहणं न ।

२०. भाव्यमानोऽप्युकारः सवर्णान् गृह्णाति ।

२१. वर्णाश्रये नास्ति प्रत्ययलक्षणम् ।

२२. उणादयोऽव्युत्पन्नानि प्रातिपदिकानि ।

२३. प्रत्ययग्रहणे यस्मात्स विहितस्तदादेस्तदन्तस्य ग्रहणम् ।
२४. प्रत्ययग्रहणे चापञ्चम्याः ।
२५. उत्तरपदाधिकारे प्रत्ययग्रहणे न तदन्तग्रहणम् ।
२६. स्त्रीप्रत्यये चानुपसर्जने न ।
२७. संज्ञाविधौ प्रत्ययग्रहणे तदन्तग्रहणं नास्ति ।
२८. कृद्ग्रहणे गतिकारकपूर्वस्यापि ग्रहणम् ।
२९. पदाङ्गाधिकारे तस्य च तदन्तस्य च ।
३०. व्यपदेशिवदेकस्मिन् ।
३१. ग्रहणवता प्रातिपदिकेन तदन्तविधिर्नास्ति ।
३२. व्यपदेशिवद्भावोऽप्रातिपदिकेन ।
३३. यस्मिन्विधिस्तदादावल्ग्रहणे ।
३४. सर्वो द्वन्द्वो विभाषैकवद्भवति ।
३५. सर्वे विधयश्छन्दसि विकल्प्यन्ते ।
३६. प्रकृतिवदनुकरणं भवति ।
३७. एकदेशविकृतमनन्यवत् ।
३८. पूर्वपरनित्यान्तरङ्गापवादानामुत्तरोत्तरं बलीयः ।
३९. पुनःप्रसङ्गविज्ञानात्सिद्धम् ।
४०. सकृद्गतौ विप्रतिषेधे यद्बाधितं तद्बाधितमेव ।
४१. विकरणेभ्यो नियमो बलीयान् ।
४२. परान्नित्यं बलवत् ।
४३. शब्दान्तरस्य प्राप्नुवन् विधिरनित्यो भवति ।
४४. शब्दान्तरात्प्राप्नुवतः शब्दान्तरे प्राप्नुवतश्चानित्यत्वम् ।
४५. लक्षणान्तरेण प्राप्नुवन् विधिरनित्यः ।
४६. क्वचित्कृताकृतप्रसङ्गमात्रेणापि नित्यता ।
४७. यस्य च लक्षणान्तरेण निमित्तं विहन्यते न तदनित्यम् ।
४८. यस्य च लक्षणान्तरेण निमित्तं विहन्यते तदप्यनित्यम् ।
४९. स्वरभिन्नस्य प्राप्नुवन् विधिरनित्यो भवति ।
५०. असिद्धं बहिरङ्गमन्तरङ्गे ।
५१. नाजानन्तर्ये बहिष्ट्वप्रक्लृप्तिः ।
५२. अन्तरङ्गानपि विधीन् बहिरङ्गो लुग्बाधते ।
५३. पूर्वोत्तरनिमित्तकार्यात्पूर्वमन्तरङ्गोऽप्येकादेशो न ।
५४. अन्तरङ्गानपि विधीन् बहिरङ्गो ल्यब्बाधते ।
५५. वार्णादाङ्गं बलीयो भवति ।
५६. अकृतव्यूहाः पाणिनीयाः ।
५७. अन्तरङ्गादप्यपवादो बलीयान् ।
५७. (अ) येन नाप्राप्ते यो विधिरारभ्यते स तस्य बाधको भवति ।
५८. क्वचिदपवादविषयेऽप्युत्सर्गोऽभिनिविशते ।
५९. पुरस्तादपवादा अनन्तरान् विधीन् बाधन्ते नोत्तरान् ।
६०. मध्येऽपवादाः पूर्वान् विधीन् बाधन्ते नोत्तरान् ।
६१. अनन्तरस्य विधिर्वा भवति प्रतिषेधो वेति ।
६२. पूर्वं ह्यपवादा अभिनिविशन्ते पश्चादुत्सर्गाः ।
६३. प्रकल्प्य वापवादविषयं तत उत्सर्गोऽभिनिविशते ।
६४. उपसञ्जनिष्यमाणनिमित्तोऽप्यपवाद उपसञ्जातनिमित्तमप्युत्सर्गं बाधत इति ।
६५. अपवादो यद्यन्यत्र चरितार्थस्तर्ह्यन्तरङ्गेण बाध्यते ।
६६. अभ्यासविकारेषु बाध्यबाधकभावो नास्ति ।
६७. ताच्छीलिकेषु वासरूपविधिर्नास्ति ।
६८. क्तल्युट्तुमुन्खलर्थेषु वासरूपविधिर्नास्ति ।
६९. लादेशेषु वासरूपविधिर्नास्ति ।
७०. उभयनिर्देशे पञ्चमीनिर्देशो बलीयान् ।
७१. प्रातिपदिकग्रहणे लिङ्गविशिष्टस्यापि ग्रहणम् ।
७२. विभक्तौ लिङ्गविशिष्टाग्रहणम् ।
७३. सूत्रे लिङ्गवचनमतन्त्रम् ।
७४. नञिवयुक्तमन्यसदृशाधिकरणे तथा ह्यर्थगतिः ।
७५. गतिकारकोपपदानां कृद्भिः सह समासवचनं प्राक्सुबुत्पत्तेः ।
७६. साम्प्रतिकाभावे भूतपूर्वगतिः ।
७७. बहुव्रीहौ तद्गुणसंविज्ञानमपि ।
७८. चानुकृष्टं नोत्तरत्र ।
७९. स्वरविधौ व्यञ्जनमविद्यमानवत् ।
८०. हलस्वरप्राप्तौ व्यञ्जनमविद्यमानवत् ।
८१. निरनुबन्धकग्रहणे न सानुबन्धकस्य ।
८२. तदनुबन्धकग्रहणे नातदनुबन्धकस्य ।

८३. क्वचित्स्वार्थिकाः प्रकृतितो लिङ्गवचनान्यतिवर्तन्ते ।

८४. समासान्तविधिरनित्यः ।

८५. सन्निपातलक्षणो विधिरनिमित्तं तद्विघातस्य ।

८६. सन्नियोगशिष्टानामन्यतरापाये उभयोरप्यपायः ।

८७. ताच्छीलिके णेऽण्कृतानि भवन्ति ।

८८. धातोः कार्यमुच्यमानं तत्प्रत्यये भवति ।

८९. तन्मध्यपतितस्तद्ग्रहणेन गृह्यते ।

९०. लुग्विकरणालुग्विकरणयोरलुग्विकरणस्य ।

९१. प्रकृतिग्रहणे ण्यधिकस्यापि ग्रहणम् ।

९२. अङ्गवृत्ते पुनर्वृत्तावविधिः ।

९३. (१) संज्ञापूर्वकविधेरनित्यत्वम् ।

९३. (२) आगमशास्त्रमनित्यम् ।

९३. (३) गणकार्यमनित्यम् ।

९३. (४) अनुदात्तेत्त्वलक्षणमात्मनेपदमनित्यम् ।

९३. (५) नञ्घटितमनित्यम् ।

९३. (६) आतिदेशिकमनित्यम् ।

९३. (७,८) सर्वविधिभ्यो लोपविधिरिड्विधिश्च बलवान् ।

९३. (९) प्रकृतिग्रहणे यङ्लुगन्तस्यापि ग्रहणम् ।

९३. (१०) विधौ परिभाषोपतिष्ठते नानुवादे ।

९४. उपपदविभक्तेः कारकविभक्तिर्बलीयसी ।

९५. अनन्त्यविकारेऽन्त्यसदेशस्य ।

९६. नानर्थकेऽलोऽन्त्यविधिरनभ्यासविकारे ।

९७. प्रधानाप्रधानयोः प्रधाने कार्यसम्प्रत्ययः ।

९८. अवयवप्रसिद्धेः समुदायप्रसिद्धिर्बलीयसी ।

९९. व्यवस्थितविभाषयापि कार्याणि क्रियन्ते ।

१००. विधिनियमसम्भवे विधिरेव ज्यायान् ।

१०१. सामान्यातिदेशे विशेषानतिदेशः ।

१०२. प्रत्ययाप्रत्यययोः प्रत्ययस्य ग्रहणम् ।

१०३. सहचरितासहचरितयोः सहचरितस्यैव ग्रहणम् ।

१०४. श्रुतानुमितयोः श्रुतसम्बन्धो बलवान् ।

१०५. लक्षणप्रतिपदोक्तयोः प्रतिपदोक्तस्यैव ग्रहणम् ।

१०६. गामादाग्रहणेष्वविशेषः ।

१०७. प्रत्येकं वाक्यपरिसमाप्तिः ।

१०८. क्वचित्समुदायेऽपि ।

१०९. अभेदका गुणाः ।

११०. बाधकान्येव निपातनानि ।

१११. पर्जन्यवल्लक्षणप्रवृत्तिः ।

११२. निषेधाश्च बलीयांसः ।

११३. अनिर्दिष्टार्थाः प्रत्ययाः स्वार्थे ।

११४. योगविभागादिष्टसिद्धिः ।

११५. पर्यायशब्दानां लाघवगौरवचर्चा नाद्रियते ।

११६. ज्ञापकसिद्धं न सर्वत्र ।

११७. पूर्वत्रासिद्धीयमद्विर्वचने ।

११८. एकस्या आकृतेश्चरितः प्रयोगो द्वितीयस्यास्तृतीयस्याश्च न भविष्यति ।

११९. सम्प्रसारणं तदाश्रयं च कार्यं बलवत् ।

१२०. (१) क्वचिद्विकृतिः प्रकृतिं गृह्णाति ।

१२०. (२) औपदेशिकप्रायोगिकयोरौपदेशिकस्यैव ग्रहणम् ।

१२०. (३) श्तिपा शपाऽनुबन्धेन निर्दिष्टं यद्गणेन च ।
यत्रैकाज्ग्रहणं चैव पञ्चैतानि न यङ्लुकि ॥

१२१. पदगौरवाद्योगविभागो गरीयान् ।

१२२. अर्धमात्रालाघवेन पुत्रोत्सवं मन्यन्ते वैयाकरणाः ।

इति नागेशभट्टव्याख्याताः परिभाषाः ।

--:o:--

## १८. शेषाद्रिसुधीव्याख्याताः परिभाषाः।

१. व्याख्यानतो विशेषप्रतिपत्तिर्न हि सन्देहादलक्षणम्।
२. यथोद्देशं संज्ञापरिभाषम्।
३. कार्यकालं संज्ञापरिभाषम्।
४. अनेकान्ता अनुबन्धाः।
५. एकान्ता अनुबन्धाः।
६. नानुबन्धकृतमसारूप्यम्।
७. नानुबन्धकृतमनेकाल्त्वम्।
८. नानुबन्धकृतमनेजन्तत्वम्।
९. कृत्रिमाकृत्रिमयोः कृत्रिमे कार्यसम्प्रत्ययः।
१०. न हि कार्यी निमित्ततयाश्रीयते।
११. तदागमास्तद्गुणीभूतास्तद्ग्रहणेन गृह्यन्ते।
१२. निर्दिश्यमानस्यादेशा भवन्ति।
१३. यत्रानेकविधमान्तर्यं तत्र स्थानत आन्तर्यं बलीयः।
१४. अर्थवद्ग्रहणे नानर्थकस्य।
१५. गौणमुख्ययोर्मुख्ये कार्यसम्प्रत्ययः।
१६. अनिनस्मन्ग्रहणान्यर्थवता चानर्थकेन च तदन्तविधिं प्रयोजयन्ति।
१७. एकयोगनिर्दिष्टानां सह वा प्रवृत्तिः सह वा निवृत्तिः।
१८. एकयोगनिर्दिष्टानामप्येकदेशोऽनुवर्तते।
१९. भाव्यमानेन सवर्णानां ग्रहणं न।
२०. क्वचिद्भाव्यमानोऽप्यण् सवर्णान् गृह्णाति।
२१. वर्णाश्रये नास्ति प्रत्ययलक्षणम्।
२२. उणादयोऽव्युत्पन्नानि प्रातिपदिकानि।
२३. प्रत्ययग्रहणे यस्मात्स विहितस्तदादेस्तदन्तस्य ग्रहणम्।
२४. प्रत्ययग्रहणे चापञ्चम्याः।
२५. उत्तरपदाधिकारे प्रत्ययग्रहणपरिभाषा न भवति।
२६. स्त्रीप्रत्यये चानुपसर्जने न।
२७. संज्ञाविधौ प्रत्ययग्रहणे तदन्तग्रहणं नास्ति।
२८. कृद्ग्रहणे गतिकारकपूर्वस्यापि ग्रहणम्।
२९. पदाङ्गाधिकारे तस्य च तदन्तस्य च।
३०. व्यपदेशिवदेकस्मिन्।
३१. ग्रहणवता प्रातिपदिकेन तदन्तविधिर्नास्ति।
३२. व्यपदेशिवद्भावोऽप्रातिपदिकेन।
३३. यस्मिन्विधिस्तदादावल्ग्रहणे।
३४. सर्वो द्वन्द्वो विभाषैकवद्भवति।
३५. सर्वे विधयश्छन्दसि विकल्प्यन्ते।
३६. प्रकृतिवदनुकरणं भवति।
३७. एकदेशविकृतमनन्यवद्भवति।
३८. परनित्यान्तरङ्गापवादानामुत्तरोत्तरं बलीयः।
३९. सकृद्गतौ विप्रतिषेधे यद्बाधितं तद्बाधितमेव।
४०. पुनःप्रसङ्गविज्ञानात्सिद्धम्।
४१. विकरणेभ्यो नियमो बलीयान्।
४२. असिद्धं बहिरङ्गमन्तरङ्गे।
४३. नाजानन्तर्ये बहिष्ट्वप्रक्लृप्तिः।
४४. अन्तरङ्गानपि विधीन् बहिरङ्गो लुग्बाधते।
४५. पूर्वोत्तरपदनिमित्तकार्यात्पूर्वमन्तरङ्गोऽप्येकादेशो न।
४६. अन्तरङ्गानपि विधीन् बहिरङ्गो ल्यब्बाधते।
४७. वार्णादाङ्गं बलीयः।
४८. अकृतव्यूहाः पाणिनीयाः।
४९. येन नाप्राप्ते यो विधिरारभ्यते स तस्यापवादः।
५०. पुरस्तादपवादा अनन्तरान् विधीन् बाधन्ते नोत्तरान्।
५१. मध्येऽपवादाः पूर्वानेव विधीन् बाधन्ते नोत्तरान्।

५२. अनन्तरस्य विधिर्वा भवति प्रतिषेधो वा।

५३. पूर्वं ह्यपवादा अभिनिविशन्ते पश्चादुत्सर्गाः।

५४. प्रकल्प्य चापवादविषयं तत उत्सर्गोऽभिनिविशते।

५५. अपवादोऽपि यद्यन्यत्र चरितार्थस्तर्ह्यन्तरङ्गेण बाध्यते।

५६. अभ्यासविकारेषु बाधका न बाध्यन्ते।

५७. ताच्छीलिका अपवादा अताच्छीलिकानुत्सर्गांस्ताच्छीलिकांश्च नित्यं बाधन्ते।

५८. क्तल्युट्तुमुन्खलर्थेषु वासरूपविधिर्नास्ति।

५९. लादेशेषु वासरूपविधिर्नास्ति।

६०. उभयनिर्देशे पञ्चमीनिर्देशो विप्रतिषेधेन।

६१. प्रातिपदिकग्रहणे लिङ्गविशिष्टस्यापि ग्रहणम्।

६२. सूत्रे लिङ्गवचनमतन्त्रम्।

६३. नञिवयुक्तमन्यसदृशाधिकरणे तथा ह्यर्थगतिः।

६४. गतिकारकोपपदानां कृद्भिः सह समासवचनं प्राक्सुबुत्पत्तेः।

६५. साम्प्रतिकाभावे भूतपूर्वगतिः।

६६. बहुव्रीहौ तद्गुणसंविज्ञानमपि।

६७. चानुकृष्टं नोत्तरत्र।

६८. ह्रस्वरप्राप्तौ व्यञ्जनमविद्यमानवत्।

६९. निरनुबन्धकग्रहणे न सानुबन्धकस्य।

७०. तदनुबन्धकग्रहणे नातदनुबन्धकस्य।

७१. क्वचित्स्वार्थिकाः प्रत्ययाः प्रकृतितो लिङ्गवचनान्यतिवर्तन्ते।

७२. समासान्तविधिरनित्यः।

७३. सन्निपातलक्षणो विधिरनिमित्तं तद्विघातस्य।

७४. सन्नियोगशिष्टानामन्यतरापाय उभयोरप्यपायः।

७५. ताच्छीलिके णेऽण्कृतं कार्यं भवति।

७६. धातोः कार्यमुच्यमानं तत्प्रत्यये भवति।

७७. तन्मध्यपतितस्तद्ग्रहणेन गृह्यते।

७८. लुग्विकरणालुग्विकरणयोरलुग्विकरणस्य।

७९. प्रकृतिग्रहणे ण्यधिकस्यापि ग्रहणं कुत्वविषये भवति।

८०. अङ्गवृत्ते पुनरङ्गवृत्तावविधिः।

८१. संज्ञापूर्वको विधिरनित्यः।

८२. अनित्यमागमानुशासनम्।

८३. गणकार्यमनित्यम्।

८४. अनुदात्तेत्त्वलक्षणमात्मनेपदमनित्यम्।

८५. नञ्घटितमनित्यम्।

८६. प्रकृतिग्रहणे यङ्लुगन्तस्यापि ग्रहणम्।

८७. विधौ परिभाषा नानुवादे।

८८. उपपदविभक्तेः कारकविभक्तिर्बलीयसी।

८९. अनभ्य विकारेऽभ्यसदेशस्य।

९०. नानर्थकेऽलोऽन्त्यविधिरनभ्यासविकारे।

९१. प्रधानाप्रधानयोः प्रधाने कार्यसम्प्रत्ययः।

९२. अवयवप्रसिद्धेः समुदायप्रसिद्धिर्बलीयसी।

९३. सामान्यातिदेशे विशेषानतिदेशः।

९४. प्रत्ययाप्रत्यययोः प्रत्ययस्यैव ग्रहणम्।

९५. सहचरितासहचरितयोः सहचरितस्यैव ग्रहणम्।

९६. श्रुतानुमितयोः श्रुतसम्बन्धो बलीयान्।

९७. लक्षणप्रतिपदोक्तयोः प्रतिपदोक्तस्यैव ग्रहणम्।

९८. नामादाग्रहणेऽविशेषः।

९९. प्रत्येकं वाक्यपरिसमाप्तिः।

१००. समुदाये वाक्यपरिसमाप्तिः।

१०१. अभेदका इह शास्त्रे गुणाः।

१०२. बाधकानि निपातनानि।

१०३. पर्जन्यवल्लक्षणप्रवृत्तिः।

१०४. निषेधाश्च बलीयांसः।

१०५. अनिर्दिष्टार्थाः प्रत्ययाः स्वार्थे भवन्ति।

१०६. पूर्वत्रासिद्धीयमद्विर्वचने।

१०७. एकस्या आकृतेश्चरितः प्रयोगो द्वितीयस्यास्तृतीयस्याश्च न भविष्यति।

१०८. सम्प्रसारणं तदाश्रयं च कार्यं बलवत्।

१०९. श्तिपा शपानुबन्धेन निर्दिष्टं यद्गणेन च।
यत्रैकाज्ग्रहणं चैव पञ्चैतानि न यङ्लुकि॥

११०. पूर्वत्रासिद्धीये न स्थानिवत्।

१११. तस्य दोषः संयोगादिलोपलत्वणत्वेषु।

इति शेषाद्रिनाथसुधीव्याख्याताः परिभाषाः॥

इति परिभाषापाठः।



—:०:—

# अथ लिङ्गानुशासनम्

१. लिङ्गम् ।

२. स्त्री ।

३. ऋकारान्ता मातृदुहितृस्वसृयातृननान्दरः ।

४. अन्यूप्रत्ययान्तो धातुः ।

५. अशनिभरण्यरणयः पुंसि च ।

६. मिन्यन्तः ।

७. वह्निवृष्ण्यग्नयः पुंसि ।

८. श्रोणियोन्यूर्मयः पुंसि च ।

९. क्तिन्नन्तः ।

१०. ईकारान्तश्च ।

११. ऊङाबन्तश्च ।

१२. य्वन्तमेकाक्षरम् ।

१३. विंशत्यादिरा नवतेः ।

१४. दुन्दुभिरक्षेषु ।

१५. नाभिरक्षत्रिये ।

१६. उभावप्यन्यत्र पुंसि ।

१७. तलन्तः ।

१८. भूमिविद्युत्सरिल्लतावनिताभिधानानि ।

१९. यादो नपुंसकम् ।

२०. भास्स्रुक्स्रग्दिग्दृगुष्णिगुपानहः ।

२१. स्थूणोर्णे नपुंसके च ।

२२. गृहशशाभ्यां क्लीबे ।

२३. प्रावृड्विप्रुड्रुट्तृड्विड्त्विषः ।

२४. दर्विविदिवेदिखनिशान्यश्रिवेशिकृष्योषधिकट्यङ्गुलयः ।

२५. तिथिनाडिरुचिवीचिनालिधूलिकिकिकेलिच्छविरात्र्यादयः ।

२६. शष्कुलिराजिकुट्यशनिवर्तिभ्रुकुटित्रुटिवलिपङ्क्तयः ।

२७. प्रतिपदापद्विपत्संपच्छरत्संसत्परिषदुषः-संवित्क्षुत्पुन्मुत्समिधः ।

२८. आशीर्धूर्पूर्गीर्द्वारः ।

२९. अप्सुमनस्समासिकतावर्षाणां बहुत्वं च ।

३०. स्रक्त्वग्ज्योग्वाग्यवागूनौस्फिचः ।

३१. तटिसीमासंध्याः ।

३२. चुल्लिवेणिखार्यश्च ।

३३. ताराधाराज्योत्स्नादयश्च ।

३४. शलाका स्त्रियां नित्यम् ।

३५. पुमान् ।

३६. घञबन्तः ।

३७. घाजन्तश्च ।

३८. भयलिङ्गभगपदानि नपुंसके ।

३९. नङन्तः ।

४०. याच्ञा स्त्रियाम् ।

४१. क्यन्तो घुः ।

४२. इषुधिः स्त्री च ।

४३. देवासुरात्मस्वर्गगिरिसमुद्रनखकेशदन्तस्तनभुजकण्ठखड्गशरपङ्काभिधानानि ।

४४. त्रिविष्टपत्रिभुवने नपुंसके ।

४५. द्यौः स्त्रियाम् ।

४६. इषुबाहू स्त्रियां च ।

४७. बाणकाण्डौ नपुंसके च ।

४८. नान्तः ।

४९. क्रतुपुरुषकपोलगुल्फमेघाभिधानानि ।

५०. अभ्रं नपुंसकम् ।

५१. उकारान्तः ।

५२. धेनुरज्जुकुहूसरयूतनुरेणुप्रियङ्गवः स्त्रियाम् ।

५३. समासे रज्जुः पुंसि च ।

५४. श्मश्रुजानुस्वाद्वश्रुजतुत्रपुतालूनि नपुंसके ।

५५. वसु चार्थवाचि ।

५६. मद्गुमधुशीधुसानुकमण्डलूनि नपुंसके च ।

५७. रुत्वन्तः ।

५८. दारुकसेरुजतुवस्तुमस्तूनि नपुंसके ।

५९. सक्तुर्नपुंसके च ।

६०. प्राग्रश्मेरकारान्तः ।

६१. कोपधः ।

६२. चिबुकशालूकप्रातिपदिकांशुकोल्मुकानि ।

६३. कण्टकानीकसरकमोदकचषकमस्तकपुस्तकतडाकनिष्कशुष्कवर्चस्कपिनाकभाण्डककटकशण्डकपिटकतालकफलककल्कपुलाकानि नपुंसके च ।

६४. टोपधः ।

६५. किरीटमुकुटललाटवटवीटशृङ्गाटकरटलोष्टानि नपुंसके ।

६६. कुटकूटकपटकपाटकर्पटनटनिकटकीटकटानि नपुंसके च ।

६७. णोपधः ।

६८. ऋणलवणपर्णतोरणरणोष्णानि नपुंसके च ।

६९. कार्षापणस्वर्णसुवर्णव्रणचरणवृषणविषाणचूर्णतृणानि नपुंसके च ।

७०. थोपधः ।

७१. काष्ठपृष्ठरिक्थोक्थानि नपुंसके ।

७२. काष्ठा दिगर्थाः स्त्रियाम् ।

७३. तीर्थप्रोथयूथगाथानि नपुंसके च ।

७४. नोपधः ।

७५. जघनाजिनतुहिनकाननवनवृजिनविपिनवेतनशासनसोपानमिथुनश्मशानरत्ननिम्नचिह्नानि नपुंसके ।

७६. मानयानाभिधाननलिनपुलिनोद्यानशयनासनस्थानचन्दनालानसमानभवनवसनसंभावनविभावनविमानानि नपुंसके च ।

७७. पोपधः ।

७८. पापरूप्योडुपतल्पशिल्पपुष्पशष्पसमीपान्तरीपाणि नपुंसके ।

७९. शूर्पकुतपकुणपद्वीपविटपानि नपुंसके च ।

८०. भोपधः ।

८१. तलभं नपुंसकम् ।

८२. जृम्भं नपुंसके च ।

८३. मोपधः ।

८४. रुक्मसिध्मयुध्मेध्मगुल्माध्यात्मकुङ्कुमानि नपुंसके ।

८५. संग्रामदाडिमकुसुमाश्रमक्षेमक्षौमहोमोद्दामानि नपुंसके च ।

८६. योपधः ।

८७. किसलयहृदयेन्द्रियोत्तरीयाणि नपुंसके ।

८८. गोमयकषायमलयान्वयाव्ययानि नपुंसके च ।

८९. रोपधः ।

९०. द्वाराग्रस्फारतक्रवक्रवप्रक्षिप्रक्षुद्रच्छिद्रनारतीरदूरकृच्छ्ररन्ध्राश्रश्वभ्रभीरगभीरक्रूरविचित्रकेयूरकेदारोदरशरीरकन्दरमन्दारपञ्जराजरजठराजिरवैरचामरपुष्करगह्वरकुटीरकुलीरचत्वरकाश्मीरनीराम्बरशिशिरतन्त्रयन्त्रक्षेत्रक्षत्रमित्रकलत्रच्छत्रसूत्रवक्त्रनेत्रगोत्राङ्गुलित्रभलत्रास्त्रशस्त्रशास्त्रवस्त्रपत्रपात्रनक्षत्राणि नपुंसके ।

९१. शुक्रमदेवतायाम् ।

९२. चक्रवज्रान्धकारसारावारपारक्षीरतोमरशृङ्गारभृङ्गारमन्दारोशीरतिमिरशिशिराणि नपुंसके च ।

९३. षोपधः ।

९४. शिरीषाम्बरीषपीयूषपुरीषकिल्बिषकल्माषाणि नपुंसके ।

९५. यूषकरीषमिषविषवर्षाणि नपुंसके च ।

९६. सोपधः ।

९७. पनसबिसबुससाहसानि नपुंसके ।

९८. चमसरसनिर्यासोपवासकार्पासवासमासकासकांसमांसानि नपुंसके च ।

९९. कंसं चाप्राणिनि ।

१००. रश्मिदिवसाभिधानानि ।

१०१. दीधितिः स्त्रियाम् ।

१०२. दिनाहनी नपुंसके ।

१०३. मानाभिधानानि ।

१०४. द्रोणाढकौ नपुंसके च ।

१०५. खारीमानिके स्त्रियाम् ।

१०६. दाराक्षतलाजासूनां बहुत्वं च ।

१०७. नाड्यपजनोपपदानि व्रणाङ्गपदानि ।

१०८. मरुद्गरुत्तरदृत्विजः ।

१०९. ऋषिराशिदृतिग्रन्थिक्रिमिध्वनिबलिकौलिमौलिरविकपिमुनयः ।

११०. ध्वजगजमुञ्जपुञ्जाः ।

१११. हस्तकुन्तान्तवातव्रातदूतधूर्तसूतचूतमुहूर्ताः ।

११२. षण्डमण्डकरण्डभरण्डवरण्डतुण्डगण्डमुण्डपाषण्डशिखण्डाः ।

११३. वंशांशपुरोडाशाः ।

११४. ह्रदकन्दकुन्दबुद्बुदशब्दाः ।

११५. अर्घपथिमथ्यृभुक्षिस्तम्बनितम्बपूगाः ।

११६. पल्लवपल्वलकफरेफकटाह-निर्व्यूहमठमणितरङ्ग-गन्धस्कन्धमृदङ्गसमुद्ग-पुङ्खाः ।
११७. सारथ्यतिथिकुक्षिवस्ति-पाण्यञ्जलयः ।
११८. नपुंसकम् ।
११९. भावे ल्युडन्तः ।
१२०. निष्ठा च ।
१२१. त्वष्यञौ तद्धितौ ।
१२२. कर्मणि च ब्राह्मणादिगुण-वचनेभ्यः ।
१२३. यद्यढग्यगण्वुञ्छाश्च भावकर्मणि ।
१२४. द्वन्द्वैकत्वम् ।
१२५. अभाषायां हेमन्तशिशि-रावहोरात्रे च ।
१२६. अनञ्कर्मधारयस्तत्पुरुषः ।
१२७. अनल्पे छाया ।
१२८. राजामनुष्यपूर्वा सभा ।
१२९. सुरासेनाच्छायाशालानिशाः स्त्रियां च ।
१३०. परवत् ।
१३१. अपथपुण्याहे नपुंसके ।
१३२. संख्यापूर्वा रात्रिः ।
१३३. द्विगुः स्त्रियां च ।
१३४. इसुसन्तः ।
१३५. अर्चिः स्त्रियां च ।
१३६. छदिः स्त्रियामेव ।
१३७. मुखनयनलोहवनमांस-रुधिरकार्मुकविवरजलहल-धनान्नाभिधानानि ।
१३८. सीरार्थोदनाः पुंसि ।
१३९. वक्त्रनेत्रारण्यगाण्डीवानि पुंसि च ।
१४०. अटवी स्त्रियाम् ।
१४१. लोपधः ।
१४२. तूलोपलतालकुसूलतरल-कम्बलदेवलवृषलाः पुंसि ।
१४३. शीलमूलमङ्गलसालकमल-तलमुसलकुण्डलपलल-मृणालबालनिगलपलाल-बिडालखिलशूलाः पुंसि च ।
१४४. शतादिः संख्या ।
१४५. शतायुतप्रयुताः पुंसि च ।
१४६. लक्षा कोटिः स्त्रियाम् ।
१४७. सहस्रः पुंसि च ।
१४८. मन्द्व्यचोऽकर्तरि ।
१४९. ब्रह्म पुंसि च ।
१५०. नामरोमणी नपुंसके ।
१५१. असन्तो द्व्यचः ।
१५२. अप्सराः स्त्रियाम् ।
१५३. त्रान्तः ।
१५४. यात्रामात्राभस्त्रादंष्ट्रा-वरत्राः स्त्रियामेव ।
१५५. भृत्रामित्रच्छात्रपुत्रमन्त्र-वृत्रमेढ्रोष्ट्राः पुंसि ।
१५६. पत्रपात्रपवित्रसूत्रच्छत्राः पुंसि च ।
१५७. बलकुसुमशुल्बयुद्धपत्तन-रणाभिधानानि ।
१५८. पद्मकमलोत्पलानि पुंसि च ।
१५९. आहवसङ्ग्रामौ पुंसि ।
१६०. आजिः स्त्रियामेव ।
१६१. फलजातिः ।
१६२. वृक्षजातिः स्त्रियामेव ।
१६३. वियज्जगत्सकृच्छकन्पृषच्छ-कृद्यकृदुदश्वितः ।
१६४. नवनीतावतानृतामृत-निमित्तवित्तचित्तपित्तव्रतरजत-वृत्तपलितानि ।
१६५. श्राद्धकुलिशदैवपीठकुण्डा-ङ्कदधिसक्थ्यक्ष्यास्यास्पदा-काशकण्वबीजानि ।
१६६. दैवं पुंसि च ।
१६७. धान्याज्यसस्यरूप्यपण्य-वर्ण्यधिष्ण्यहव्यकव्य-काव्यसत्यापत्यमूल्यशिक्य-कुड्यमद्यहर्म्यतूर्य-सैन्यानि ।
१६८. द्वन्द्वबर्हदुःखबडिशपिच्छ-बिम्बकुटुम्बकवचवर-वृन्दारकाणि ।
१६९. अक्षमिन्द्रिये ।
१७०. स्त्रीपुंसयोः ।
१७१. गोमणियष्टिमुष्टिपाटलि-वस्तिशाल्मलित्रुटिमसि-मरीचयः ।
१७२. मृत्युसीधुकर्कन्धुकिष्कु-कण्डुरेणवः ।
१७३. गुणवचनमुकारान्तं नपुंसके च ।
१७४. अपत्यार्थतद्धिते ।
१७५. पुंनपुंसकयोः ।
१७६. घृतभूतमुस्तक्ष्वेलितैरावत-पुस्तबुस्तलोहिताः ।
१७७. शृङ्गार्धनिदाघोद्यमशल्य-दृढाः ।
१७८. व्रजकुञ्जकुथकूर्चप्रस्थ-दर्पार्भर्चदर्भपुच्छाः ।
१७९. कबन्धौषधायुधान्ताः ।
१८०. दण्डमण्डखण्डशवसैन्धव-पार्श्वाकाशाङ्कुशकाश-कुशकुलिशाः ।
१८१. गृहमेहदेहपट्टपटहाष्टा-पदाम्बुदककुदाश्च ।
१८२. अवशिष्टलिङ्गम् ।
१८३. अव्ययं कतियुष्मदस्मदः ।
१८४. ष्णान्ता संख्या ।
१८५. गुणवचनं च ।
१८६. कृत्याश्च ।
१८७. करणाधिकरणयोर्ल्युट् ।
१८८. सर्वादीनि सर्वनामानि ।

इति लिङ्गानुशासनम् ।

—:०:—

श्रीशान्तनवाचार्यप्रणीतः

# फिट्सूत्रपाठः

१. फिषोऽन्त उदात्तः ।
२. पाटलापालङ्काम्बासागरार्थानाम् ।
३. गेहार्थानामस्त्रियाम् ।
४. गुदस्य च ।
५. ध्यपूर्वस्य स्त्रीविषयस्य ।
६. खान्तस्याश्मादेः ।
७. बंहिष्ठवत्सरतिशत्थान्तानाम् ।
८. दक्षिणस्य साधौ ।
९. स्वाङ्गाख्यायामादिर्वा ।
१०. छन्दसि च ।
११. कृष्णस्यामृगाख्या चेत् ।
१२. वा नामधेयस्य ।
१३. शुक्लगौरयोरादिः ।
१४. अङ्गुष्ठोदकबकवशानां छन्दस्यन्तः ।
१५. पृष्ठस्य च ।
१६. अर्जुनस्य तृणाख्या चेत् ।
१७. आर्यस्य स्वाम्याख्या चेत् ।
१८. आशाया अदिगाख्या चेत् ।
१९. नक्षत्राणामाब्विषयाणाम् ।
२०. न कुपूर्वस्य कृत्तिकाख्या चेत् ।
२१. घृतादीनां च ।
२२. ज्येष्ठकनिष्ठयोर्वयसि ।
२३. बिल्वतिष्ययोः स्वरितो वा ।

इति फिट्सूत्रेषु प्रथमः पादः ।

—:०:—

२४. अथादिः प्राक्शकटेः ।
२५. ह्रस्वान्तस्य स्त्रीविषयस्य ।
२६. नब्विषयस्यानिसन्तस्य ।
२७. तृणधान्यानां च द्व्यषाम् ।
२८. त्रः संख्यायाः ।
२९. स्वाङ्गशिटामदन्तानाम् ।
३०. प्राणिनां कुपूर्वम् ।
३१. खय्युवर्णं कृत्रिमाख्या चेत् ।
३२. उनर्वन्नन्तानाम् ।
३३. वर्णानां तणतिनितान्तानाम् ।
३४. ह्रस्वान्तस्य ह्रस्वमनृत्ताच्छील्ये ।
३५. अक्षस्यादेवनस्य ।
३६. अर्धस्यासमद्योतने ।
३७. पीतद्वर्थानाम् ।
३८. ग्रामादीनां च ।
३९. लुबन्तस्योपमेयनामधेयस्य ।
४०. न वृक्षपर्वतविशेषव्याघ्रसिंहमहिषाणाम् ।
४१. राजविशेषस्य यमन्वा चेत् ।
४२. लघावन्ते द्वयोश्च बह्वषो गुरुः ।
४३. स्त्रीविषयवर्णाक्षुपूर्वाणाम् ।
४४. शकुनीनां च लघु पूर्वम् ।
४५. नर्तुप्राण्याख्यायाम् ।
४६. धान्यानां च वृद्धक्षान्तानाम् ।
४७. जनपदशब्दानामषान्तानाम् ।
४८. हयादीनामसंयुक्तलान्तानामन्तः पूर्वं वा ।
४९. इगन्तानां च द्व्यषाम् ।

इति फिट्सूत्रेषु द्वितीयः पादः ।

—:०:—

५०. अथ द्वितीयं प्रागीशात् ।
५१. त्र्यचां प्राङ् मकरात् ।
५२. स्वाङ्गानामकुर्वादीनाम् ।
५३. मादीनां च ।
५४. शादीनां शाकानाम् ।
५५. पान्तानां गुर्वादीनाम् ।
५६. युतान्यण्यन्तानाम् ।
५७. मकरवरूढपारेवतवितस्तेक्ष्वार्जिद्राक्षाकलोमाकाष्ठापेष्ठाकाशीनामादिर्वा ।
५८. छन्दसि च ।
५९. कर्दमादीनां च ।
६०. सुगन्धितेजनस्य ते वा ।
६१. नपः फलान्तानाम् ।
६२. यान्तस्यान्त्यात्पूर्वम् ।
६३. थान्तस्य च नालघुनी ।
६४. शिशुमारोदुम्बरबलीवर्दोष्ट्रारपुरूरवसां च ।
६५. सांकाश्यकाम्पिल्यनासिक्यदार्वाघाटानाम् ।
६६. ईषान्तस्य हयादेरादिर्वा ।

६७. उशीरदाशेरकपालपलाल-शैवालश्यामाकशारीर-शरावहृदयहिरण्यार-रण्यापत्यदेवराणाम् ।

६८. महिष्यषाढयोर्जायेष्ट-काख्या चेत् ।

इति फिट्सूत्रेषु तृतीयः पादः ।

—:०:—

६९. शकटिशकट्योरक्षरमक्षरं पर्यायेण ।

७०. गोष्ठजस्य ब्राह्मणनामधेयस्य ।

७१. पारावतस्योपोत्तमवर्जम् ।

७२. धूम्रजानुमुञ्जकेशकालवाल-स्थालीपाकानामधूजल-स्यानाम् ।

७३. कपिकेशहरिकेशयोश्छन्दसि ।

७४. न्यङ्स्वरौ स्वरितौ ।

७५. न्यर्बुदव्यल्कशयोरादिः ।

७६. तिल्यशिक्यमर्त्यकाश्मर्यधान्य-कन्याराजन्यमनुष्या-णामन्तः ।

७७. बिल्वभक्ष्यवीर्याणि छन्दसि ।

७८. त्वत्त्वसमसिमेत्यनुच्चानि ।

७९. सिमस्याथर्वणेऽन्त उदात्तः ।

८०. निपाता आद्युदात्ताः ।

८१. उपसर्गाश्चाभिवर्जम् ।

८२. एवादीनामन्तः ।

८३. वाचादीनामुभावुदात्तौ ।

८४. चादयोऽनुदात्ताः ।

८५. यथेति पादान्ते ।

८६. प्रकारादिद्विरुक्तौ ।

८७. शेषं सर्वमनुदात्तम् ।

इति फिट्सूत्रेषु चतुर्थः पादः

—:०:—

इति श्री शान्तनवाचार्यप्रणीतः फिट्सूत्रपाठः ।

—:०:—

# काशिकागतकारिकाणामकारादिक्रमेण

# सूची

अनिट्स्वरात्ततो भवतीति दृश्यता-
मिमांस्तु सेटः प्रवदन्ति तद्विदः ।
अदन्तमृदन्तमृतां च वृङ्वृञौ
श्विडीङिवर्णेष्वथ शीङ्श्रिञावपि ।। १

गणस्थमूदन्तमुतां च रुस्नुवौ
क्षुवं तथोर्णोतिमथो युणुक्ष्णवः ।
इति स्वरान्ता निपुणं समुच्चिता-
स्ततो हलन्तानपि सन्निबोधत ।। २ ७.२.१०

अनुप्रयोगे तु भुवाऽस्त्यबाधनं
स्मरन्ति कर्तुर्वचनान्मनीषिणः ।। २.४.५२

अन्तर्वत्पतिवतोस्तु मतुब्वत्वे निपातनात् ।
गर्भिण्यां जीवपत्यां च वा छन्दसि तु नुग्विधिः ।। ४.१.३२

अपत्ये कुत्सिते मूढे मनोरौत्सर्गिकः स्मृतः ।
नकारस्य च मूर्धन्यस्तेन सिध्यति माणवः ।। ४.१.१६१

अपृक्तश्चेदमो दोषो निवृत्ते डतरादिषु ।
अड्डित्त्वाड्डतरादीनां न लोपो नापि दीर्घता ।। ७.१.२५

अमावसोरहं ण्यतोर्निपातयाम्यवृद्धिताम् ।
तथैकवृत्तिता तयोः स्वरश्च मे प्रसिध्यति ।। ३.१.१२२

अमेहक्वतसित्रेभ्यस्त्यब्विधिर्योऽव्ययात्स्मृतः ।
निनिस्भ्यां ध्रुवगत्योश्च प्रवेशो नियमे तथा ।। ४.२.१०४

अर्चासु पूजनार्थासु चित्रकर्मध्वजेषु च ।
इवे प्रतिकृतौ लोपः कनो देवपथादिषु ।। ५.३.१००

अववत्तं विवत्तं च प्रवत्तं चादिकर्मणि ।
सुवत्तमनुवत्तं च निवत्तमिति चेष्यते ।। १.४.५७; ७.४.४६

अश्मानं दृषदं मन्ये मन्ये काष्ठमुलूखलम् ।
अन्धायास्तं सुतं मन्ये यस्य माता न पश्यति ।। २.३.१७

आकर्षात् पर्पादेर्भस्त्रादिभ्यः कुसीदसूत्राच्च ।
आवसथात् किशरादेः षितः षडेते ठगधिकारे ।। ४.४.७

आकृतिग्रहणा जातिर्लिङ्गानां च न सर्वभाक् ।
सकृदाख्यातनिर्ग्राह्या गोत्रं च चरणैः सह ॥ ४.१.६३

आगमस्य विकारस्य प्रकृतेः प्रत्ययस्य च ।
पृथक्स्वरनिवृत्त्यर्थमेकवर्जं पदस्वरः ॥ ६.१.१५८

आनाय्योऽनित्य इति चेद्दक्षिणाग्नौ कृतं भवेत् ।
एकयोनौ तु तं विद्यादानेयो ह्यन्यथा भवेत् ॥ ३.१.१२७

आमोऽमित्त्वमदन्तत्वादगुणत्वं विदेस्तथा ।
आस्कासोराम्विधानाच्च परस्यं कतन्तवत् ॥ ३.१.३५

आलुश्चिग्रगर्तषठांस्तु कोष्डोपरयदाण्डकी ।
क्रोष्टकिर्जालमानिश्च ब्राह्मगुप्तोऽथ जानकिः ॥ ५.३.११६

इकोऽचि व्यञ्जने मा भूदस्तु लोपः स्वरः कथम् ।
स्वरो वै श्रूयमाणेऽपि लुप्ते किं न भविष्यति ॥ १
रायात्वं तिसृभावश्च व्यवधानान्नुमा अपि ।
नुड् वाच्य उत्तरार्थं तु इह किंचित् त्रपो इति ॥ २ ७.१.७३

इच्च कस्य तकारेत्त्वं दीर्घो मा भूदृतेऽपि सः ।
अनन्तरे प्लुतो मा भूत्प्लुतश्च विषये स्मृतः ॥ १.२.१७

ईदूतौ सप्तमीत्येव लुप्तेऽर्थग्रहणाद्भवेत् ।
पूर्वस्य चेत्सवर्णोऽसावाडाम्भावः प्रसज्यते ॥ १
वचनाद्यत्र दीर्घत्वं तत्रापि सरसी यदि ।
ज्ञापकं स्यात्तदन्तत्वे मा वा पूर्वपदस्य भूत् ॥ २ १.१.१९

ईषदर्थे क्रियायोगे मर्यादाभिविधौ च यः ।
एतमातं ङितं विद्याद्वाक्यस्मरणयोरङित् ॥ १.१.१४

उदात्तत्वाद्भुवः सिद्धमिकारादित्वमिण्वचः ।
नञस्तु स्वरसिद्ध्यर्थमिकारादित्वमिष्यते ॥ ३.२.५७

उदुम्बरास्तिलखला मद्रकारा युगन्धराः ।
भुलिङ्गाः शरदण्डाश्च साल्वावयवसञ्ज्ञिताः ॥ ४.१.१७३

उभसर्वतसोः कार्या धिगुपर्यादिषु त्रिषु ।
द्वितीयाम्रेडितान्तेषु ततोऽन्यत्रापि दृश्यते ॥ २.३.२

ऊर्ध्वमानं किलोन्मानं परिमाणं तु सर्वतः ।
आयामस्तु प्रमाणं स्यात् सङ्ख्या बाह्या तु सर्वतः ॥ ५.१.१९

एकस्माण्ङञणवटा द्वाभ्यां षस्त्रिभ्य एव कणमाः स्युः ।
ज्ञेयौ चयौ चतुर्भ्यो रः पञ्चभ्यः शलौ षड्भ्यः ॥ मा.सू.१४

एति जीवन्तमानन्दो नरं वर्षशतादपि ।
जीव पुत्रक मा मैवं तपः साहसमाचर ॥ २.३.५४

एत्वं भिसि परत्वाच्चेदत ऐस् क्व भविष्यति ।
कृतेऽप्येत्वे भौतपूर्व्यादैस्तु नित्यस्तथा सति ॥ ७.१.९

ओजसोऽप्सरसो नित्यं पयसस्तु विभाषया ।
(सकारस्येष्यते लोपः शब्दशास्त्रविचक्षणैः ॥) ३.१.११

ओकारोऽयं शीविधौ ङिद्गृहीतो
ङिच्चास्माकं नास्ति कोऽयं प्रकारः ।
सामान्यार्थस्तस्य चासञ्जनेऽस्मिन्
ङित्कार्यं ते स्यां प्रसक्तं स दोषः ॥ १
ङित्त्वे विद्याद्वर्णनिर्देशमात्रं
वर्णे यत्स्यात् तच्च विद्यासवादौ ।
वर्णाश्चायं तेन ङित्त्वेऽप्यदोषो
निर्देशोऽयं पूर्वसूत्रेण वा स्यात् ॥ २ ७.१.१८

कच्चिज्जीवति ते माता कच्चिज्जीवति ते पिता ।
माराविद त्वां पृच्छामि कच्चिज्जीवति पार्वती ॥ ३.३.१५३

कन्थासु सकलः पूर्वः कतावुत्तर इष्यते ।
पूर्वोत्तरौ तदन्तादौ ष्फाणौ तत्र प्रयोजनम् ॥ ४.१.१८

कर्मस्थः पचतेर्भावः कर्मस्था च भिदेः क्रिया ।
मासासिभावः कर्तृस्थः कर्तृस्था च गमेः क्रिया ॥ ३.१.८७

किं नु यणा भवतीह न सिद्धं य्वावियुतोर्यदयं विदधाति ।
तौ च मम स्वरसन्धिषु सिद्धौ शाकलदीर्घविधी तु निवर्त्यौ ॥ १
इक्तु यदा भवति प्लुतपूर्वस्तस्य यणं विदधात्यपवादम् ।
तेन तयोश्च न शाकलदीर्घौ यण्स्वरबाधनमेव तु हेतुः ॥ २ ८.२.१०८

किरति चर्करीतान्तं पचतीत्यत्र यो नयेत् ।
प्राप्तिज्ञं तमहं मन्ये प्रारब्धस्तेन सङ्ग्रहः ॥ ७.४.९२

कृष्णोदक्पाण्डुपूर्वाया भूमेरच्प्रत्ययः स्मृतः ।
गोदावर्याश्च नद्याश्च सङ्ख्याया उत्तरे यदि ॥ ५.४.७५

कृत्वसुजर्थे षत्वं ब्रवीति कस्माच्चतुष्कपाले मा ।
षत्वं विभाषया भून्ननु सिद्धं तत्र पूर्वेण ॥ १
सिद्धे ह्ययं विधत्ते चतुरः षत्वं यदापि कृत्वोऽर्थे ।
लुप्ते कृत्वोऽर्थीये रेफस्य विसर्जनीयो हि ॥ २
एवं सति नियमार्थो द्विस्त्रिश्चतुरित्यनेन किं कार्यम् ।
अन्यो हि नेदुदुपधः कृत्वोऽर्थः कश्चिदप्यस्ति ॥ ३
अक्रियमाणे ग्रहणे विसर्जनीयस्तदा विशेष्येत ।
चतुरो न सिध्यति तदा रेफस्य विसर्जनीयो हि ॥ ४
तस्मिंस्तु क्रियमाणे युक्तं चतुरो विशेषणं भवति ।
प्रकृतं पदं तदन्तं तस्यापि विशेषणं न्याय्यम् ॥ ५ ८.३.४३

कौमारापूर्ववचने कुमार्या अण् विधीयते ।
अपूर्वत्वं यदा तस्याः कुमार्या भवतीति वा ॥ ४.२.१३

क्षुद्रजन्तुरनस्थिः स्यादथ वा क्षुद्र एव यः ।
शतं वा प्रसृतौ येषां केचिदा नकुलादपि ॥ २.४.८

क्स्नोर्गित्वान्न स्थ ईकारः क्ङितोरीत्वशासनात् ।
गुणाभावस्त्रिषु स्मार्यः श्र्युकोऽनिट्त्वं गकोरितोः ॥ १.२.११९

चतुर्थादनजादौ च लोपः पूर्वपदस्य च ।
अप्रत्यये तथैवेष्ट उवर्णाल्ल इलस्य च ॥ ५.३.८३

चिण्वद्वृद्धिर्युक् च हन्तेश्च घत्वं
दीर्घश्चोक्तो यो मितां वा चिणीति ।
इट् चासिद्धस्तेन मे लुप्यते णि-
र्नित्यश्चायं वल्निमित्तो विघाती ॥ ६.४.६२

जग्धौ सिद्धेऽन्तरङ्गत्वात्ति कितीति ल्यबुच्यते ।
ज्ञापयत्यन्तरङ्गाणां ल्यपा भवति बाधनम् ॥ २.४.३६

डावतावयवैकोऽयं निर्देशः पृथगुच्यते ।
मात्राद्यप्रतिघाताय भावः सिद्धश्च डावतोः ॥ ५.२.३८

तातङि ङित्वं सङ्क्रमकृत् स्यादन्यविधिश्चेत् तच्च तथा न ।
हेरविकारे हेरविकारो लोपविधौ तु ज्ञापकमाह ॥

तातङो ङित्त्वसामर्थ्यान्नायमन्यविधिः स्मृतः ।
न तप्तनप्तनथनादीनां तेन तेऽन्यविकारजाः ॥ ७.१.३५

दान्ते दोषो दीर्घत्वं स्याद्दान्ते दोषो निष्ठानत्वम् ।
धान्ते दोषो धत्वप्राप्तिस्थान्तेऽदोषस्तस्मात् थान्तम् ॥ ७.४.४६

तपिं तिपिं चापिमथो वपिं स्वपिं
लिपिं लुपिं तृप्यतिदृप्यती सृपिम् ।
स्वरेण नीचेन शपिं छुपिं क्षिपिं
प्रतीहि पान्तान् पठितांस्त्रयोदश ॥ ७.२.१०

तस्येदमित्यपत्येऽपि बाधनार्थं कृतं भवेत् ।
उत्सर्गः शेष एवासौ वृद्धान्यस्य प्रयोजनम् ॥ ४.१.९२

दिशिं दृशिं दंशिमथो मृशिं स्पृशिं
रिशिं रुशिं क्रोशतिमष्टमं विशिम् ।
लिशं च शान्तानिटः पुराणगाः
पठन्ति पाठेषु दशैव नेतरान् ॥ ७.२.१०

दिहिर्दुहिर्मेहतिरोहती वहि-
र्नहिस्तु षष्ठो वहतिस्तथा लिहिः ।
इमेऽनिटोऽष्टाविह मुक्तसंशया
गणेषु हान्ताः प्रविभज्य कीर्तिताः ॥ ७.२.१०

दीर्घविधि" इहेन्प्रभृतीनां तं विनियम्य सुटीति सुविद्वान् ।
शौ नियमं पुनरेव विदध्यात् भ्रूणहनीति तथास्य न दुष्येत् ॥१
दाहिन्म नियम्यं सुटीत्यविशेषे शौ नियमं कुरु वाप्यसमीक्ष्य ।
दीर्घविधेरुपधानियमान्मे हन्त थि दीर्घविधौ च न दोषः ॥२
सुट्यपि वा प्रकृतेऽनवकाशः शौ नियमोऽप्रकृतप्रतिषेधे ।
यस्य हि शौ नियमः सुटि नैतत्तेन न तत्र भवेद्विनियम्यम् ॥३ ६.४.१२

दुगागमोऽविशेषेण वक्तव्यः कारकच्छयोः ।
षष्ठीतृतीययोर्नेष्ट आशीरादिषु सप्तसु ॥ ६.३.९९

दुहियाचिरुधिप्रच्छिभिक्षिचिञामुपयोगनिमित्तमपूर्वविधौ ।
ब्रुविशासिगुणेन च यत् सचते तदकीर्तितमाचरितं कविना ॥ १.४.५१

वृष्टे सामनि जाते च द्विरण् डिद्वा विधीयते ।
तीयादीकक् न विद्याया गोत्रादङ्कवदिष्यते ॥ ४.२.८

देवत्रातो गलो ग्राह इति योगे च सद्विधिः ।
मिथस्ते न विभाष्यन्ते गवाक्षः संशितव्रतः ॥ ७.४.४१

धातुप्रकरणाद्धातुः कस्य चासञ्जनादपि ।
आह चायमिमं दीर्घं मन्ये धातुर्विभाषितः ॥ ३.१.२७

धि सकारे सिचो लोपश्चकाद्धीति प्रयोजनम् ।
आशाध्वं तु कथं जश्त्वं सकारस्य भविष्यति ॥ १
सर्वमेवं प्रसिद्धं स्याच्छ्रुतिश्चापि न भिद्यते ।
लुङश्चापि न मूर्धन्ये ग्रहणं सेटि दुष्यति ॥ २
घसिभसोर्न सिध्येत तस्मात् सिज्ग्रहणं न तत् ।
छान्दसो वर्णलोपो वा यथेष्कर्तारमध्वरे ॥ ३ ८.२.२५

धूमायन्त इवाश्लिष्टाः प्रज्वलन्तीव संहृताः ।
उल्मुकानीव मेऽमी स्वा ज्ञातयो भरतर्षभ ॥
(महाभारतात् ५.३६.३८) १.१.३५

न दरिद्रायके लोपो दरिद्राणे च नेष्यते ।
दिदरिद्रासतीत्येके दिदरिद्रिषतीति वा ॥ ६.४.११४

न सेडिति कृतेऽकित्त्वे निष्ठायामवधारणात् ।
ज्ञापकान्न परोक्षायां सनि झल्ग्रहणं विदुः ॥ १
इत्त्वं कित्संनियोगेन रेण तुल्यं सुधीवनि ।
वस्वर्थं कित्तोदेशान्निगृहीतिः प्रयोजनम् ॥ २ १.२.१८

नाकमिष्टसुखं यान्ति सुयुक्तैर्वडवारथैः ।
अथ पत्काषिणो यान्ति येऽचीकमतभाषिणः ॥ ३.१.४८

नामि दीर्घं आमि चेत् स्यात् कृते दीर्घे न नुट् भवेत् ।
वचनादत्र तन्नास्ति नोपधायाश्च चर्मणाम् ॥ ६.४.३

निष्टंक्यें व्यत्ययं विश्वामित्र: चरवं निपातनात् ।
व्यवायादेश इत्येतावुपचाय्ये निपातितौ ॥

ण्यदेकस्माच्चतुर्भ्यः क्यप् चतुर्भ्यश्च यतो विधिः ।
ण्यदेकस्माच्छब्दश्च द्वौ क्यपौ ण्यद्विधिश्चतुः ॥ ३.१.१२३

पचिं वचिं विचिरिचिरञ्जिपृच्छतीन्
निजिं सिचिं मुचिभजिभञ्जिभृज्जतीन् ।
त्यजिं यजिं युजिरुजिसञ्जिमज्जतीन्
भुजिं स्वजिं सृजिमृजौ विद्ध्यनिट्स्वरान् ॥ ७.२.१०

पञ्चम्याश्च चतुर्थ्याश्च षष्ठीप्रथमयोरपि ।
याण्यद्विवचनान्यत्र तेषु लोपो विधीयते ॥ ७.२.९०

पञ्चसु त्वेकरूपासु जय एव भविष्यति ।
अक्षादयस्तृतीयान्ताः पूर्वोक्तस्य यथा न तत् ।
कितवव्यवहारे च एकत्वेऽक्षशलाकयोः ॥ २.१.१०

पृथुं मृदुं भृशं चैव कृशं च दृढमेव च ।
परिपूर्वं वृढं चैव षडेतान् रविधौ स्मरेत् ॥ ६.४.१६१

प्रागुदञ्चौ विभजते हंसः क्षीरोदके यथा ।
विदुषां शब्दसिद्ध्यर्थं सा नः पातु शरावती ॥ १.१.७५

प्रत्याहारेऽनुबन्धानां कथमज्ग्रहणेषु न ।
आचारादप्रधानत्वाल्लोपश्च बलवत्तरः ॥ मा. सू. ४.

फली वनस्पतिर्ज्ञेयो वृक्षाः पुष्पफलोपगाः ।
ओषध्यः फलपाकान्तालता गुल्माश्च वीरुधः ॥ ८.४.६

बाहुलकं प्रकृतेस्तनुदृष्टे प्रायसमुच्चयनादपि तेषाम् ।
कार्यसशेषविधेश्च तदुक्तं नैगमरूढिभवं हि सुसाधु ॥१
नाम च धातुजमाह निरुक्ते व्याकरणे शकटस्य च तोकम् ।
यन्न पदार्थविशेषसमुत्थं प्रत्ययतः प्रकृतेश्च तदूह्यम् ॥२
संज्ञासु धातुरूपाणि प्रत्ययाश्च ततः परे ।
कार्याद्विद्यादनुबन्धमेतच्छास्त्रमुणादिषु ॥३ ३.३.१

भागपूर्वपदो विर्त्तिर्द्वितीयस्तार्णबिन्दवः ।
तृतीयस्त्वाकशापेयो गोत्राद् ठग् बहुलं ततः ॥ ४.१.१४८

भूमनिन्दाप्रशंसासु नित्ययोगेऽतिशायने ।
संसर्गेऽस्तिविवक्षायां भवन्ति मतुबादयः ॥ ५.२.९४

भूवादीनां वकारोऽयं मङ्गलार्थः प्रयुज्यते ।
भुवो वार्थं वदन्तीति भ्वर्था वा वादयः स्मृताः ॥ १.३.१

यमिर्यमन्तेष्वनिडेक इष्यते
रमिश्च यश्च श्यनि पठ्यते मनिः ।
नमिश्चतुर्थो हनिरेव पञ्चमो
गमिश्च षष्ठः प्रतिषेधवाचिनाम् ॥ ७.२.१०

यमुन्दश्च सुयामा च वार्ष्यायणिः फिञः स्मृताः ।
सौवीरेषु च कुत्सायां द्वौ योगौ शब्दवित् स्मरेत् ॥ ४.१.१४९

युवोश्चेद्द्वित्वनिर्देशो द्वित्वे यण्तु प्रसज्यते ।
अथ चेदेकवद्भावः कथं पुंवद्भवेदयम् ॥ १
द्वित्वे नैगमिको लोप एकत्वे नुमनित्यता ।
अशिष्यत्वाद्धि लिङ्गस्य पुंस्त्वं चेह समाश्रितम् ॥ २ ७.१.१

रुद्रो विश्वेश्वरो देवो युष्माकं कुलदेवता ।
स एव नाथो भगवानस्माकं शत्रुमर्दनः ॥ ८.१.१८

रुधिः सराधिर्युधिबन्धिसाधयः
क्रुधिक्षुधी शुध्यतिबुध्यती व्यधिः ।
इमे तु दान्ता दश येऽनिटो मता-
स्ततः परं सिध्यतिरेव नेतरे ॥ ७.२.१०

लुम्पेदवश्यमः कृत्ये तुंकाममनसोरपि ।
समो वा हिततयोर्मांसस्य पचियुड्घञोः ॥ ६.१.१४४

वर्णागमो वर्णविपर्ययश्च द्वौ चापरौ वर्णविकारनाशौ ।
धातोस्तदर्थातिशयेन योगस्तदुच्यते पञ्चविधं निरुक्तम् ॥ ६.३.१०९

वाच्य ऊर्णोर्णुवद्भावो यङ्प्रसिद्धिः प्रयोजनम् ।
आमश्च प्रतिषेधार्थमेकाचश्चेडुपग्रहात् ॥ १.१.३६–७.२.११

वाताय कपिला विद्युदातपायातिलोहिनी ।
पीता वर्षाय विज्ञेया दुर्भिक्षाय सिता भवेत् ॥ २.३.१३

वालवायो विदूरं च प्रकृत्यन्तरमेव वा ।
न वै तत्रेति चेद् ब्रूयाज्जित्वरीवदुपाचरेत् ॥ ४.३.८४

विना वातं विना वर्षं विद्युत्प्रपतनं विना ।
विना हस्तिकृतान् दोषान् केनेमौ पातितौ द्रुमौ ॥ २.३.३२

वेत्तेस्तु विदितो निष्ठा विद्यतेर्विन्न इष्यते ।
विन्तेर्विन्नश्च वित्तश्च भोगवित्तश्च विन्दतेः ॥ ८.२.५६

व्यायामक्षुण्णगात्रस्य पद्भ्यामुद्वर्त्तितस्य च ।
व्याधयो नोपसर्पन्ति वैनतेयमिवोरगाः ॥ ६.१.६३

शिषिं पिषिं शुष्यतिपुष्यती त्विषिं
विषिं श्लिषिं तुष्यतिदुष्यती द्विषिम् ।
इमान् वशांवोपविशन्त्यनिड्विधौ
गणेषु षान्तान् कृषिकर्षती तथा ॥ ७.२.१०

शीलतो रक्षितः क्षान्त आक्रुष्टो जुष्ट इत्यपि ।
रुष्टश्च रुषितश्चोभावभिव्याहृत इत्यपि ॥ १
हृष्टतुष्टौ तथा कान्तस्तथोभौ संयतोद्यतौ ।
कष्टं भविष्यतीत्याहुरमृतः पूर्ववत् स्मृतः ॥ २ ३.२.१८८

शकिस्तु कान्तेष्वनिडेक इष्यते
घसिश्च सान्तेषु वसिः प्रसारिणी ।
रभिस्तु भान्तेष्वथ मैथुने यभि-
स्ततस्तृतीयो लभिरेव नेतरे ॥ ७.२.१०

शुण्डिका शुष्कजङ्घा च क्षामिमानौजढस्तथा ।
मसोर्वस्वे झलां जश्स्वे गुडलिण्मान् निदर्शनम् ॥ ८.२.१

शौलिकाम्मतुबर्थीयाच्छैषिको मतुबर्थिकः ।
सरूपः प्रत्ययो नेष्टः सनन्तान्न सनिष्यते ॥ ३.१.७

श्रोत्रियस्येव ते राजन् मन्दकस्याल्पमेधसः ।
अनुवाकहता बुद्धिर्नैषा तत्त्वार्थदर्शिनी ॥ ५.४.१२२

षट्संज्ञानामन्ते लुप्ते टाबुत्पत्तिः कस्मान्न स्यात् ।
प्रत्याहाराच्चापा सिद्धं दोषस्त्विस्वे तस्मान्नोभौ ॥ ४.१.१०

संज्ञायां पुंसि दृष्टत्वान्न ते भार्या प्रसिध्यति ।
स्त्रियां भावाधिकारोऽस्ति तेन भार्या प्रसिध्यति ॥ ३.१.११२

संयोगाद्यस्य लोपे हि नलोपादिर्न सिध्यति ।
रास्तु तेनैव लोपः स्याद्धलस्तस्माद्विधीयते ॥ ६.१.६८

संयोगे गुरुसंज्ञायां गुणो भेत्तुर्न सिध्यति ।
विध्यपेक्षं लघोश्चासौ कथं कुण्डिर्न दुष्यति ॥ १
धातोर्नुमः कथं रञ्जेः स्यन्दिश्रम्भ्योर्निपातनात् ।
अनङ्लोपशिदीर्घत्वे विध्यपेक्षे न सिध्यतः ॥ २
अभ्यस्तस्य यदाहाचि लङर्थं तत्कृतं भवेत् ।
क्नुसनोर्यत्कृतं कित्त्वं ज्ञापकं स्याल्लघोर्गुणे ॥ ३ ७.३.८६

सत्त्वे निविशतेऽपैति पृथग्जातिषु दृश्यते ।
आधेयश्चाक्रियाजश्च सोऽसत्त्वप्रकृतिर्गुणः ॥ ४.१.४४

सदृशं त्रिषु लिङ्गेषु सर्वासु च विभक्तिषु ।
वचनेषु च सर्वेषु यन्न व्येति तदव्ययम् ॥ १.१.३७

समानस्य तदादेश्च अध्यात्मादिषु चेष्यते ।
ऊर्ध्वंदमाच्च देहाच्च लोकोत्तरपदस्य च ॥ १
मुखपार्श्वतसोरीयः कुग्जनस्य परस्य च ।
ईयः कार्योऽथ मध्यस्य मण्मीयौ प्रत्ययौ तथा ॥ २ ४.३.६०

सम्बोधने तूशनसस्त्रिरूपं सान्तं तथा नान्तमथाप्यदन्तम् ।
माध्यन्दिनिर्वष्टि गुणं त्विगन्ते नपुंसके व्याघ्रपदां वरिष्ठः ॥ ७.१.९४

सर्वे शकुनयो भक्ष्या विष्किराः कुक्कुटादृते । ६.१.१५०

सिद्धे यस्येति लोपेन किमर्थं ययतौ कितौ ।
ग्रहणं माऽतदर्थे भूद्वामदेव्यस्य नञ्स्वरे ॥ ४.२.९

सुपि कुत्सने क्रियाया मलोप इष्टोऽतिङीति चोक्तार्थम् ।
पूतिश्च चानुबन्धो विभाषितं चापि बह्वर्थम् ॥ ८.१.६९

सुपेः षत्वं स्वपेर्मा भूद्विसुष्वापेति केन न ।
हलादिशेषान्न सुपिरिष्टं पूर्वं प्रसारणम् ॥ १
स्थादीनां नियमो नात्र प्राक्सितादुत्तरः सुपिः ।
अनर्थके विषुषुपुः सुपिभूतो द्विरुच्यते ॥ २ ८.३.८८

सुप्तिङुपग्रहलिङ्गनराणां कालहलच्स्वरकर्तृयङां च ।
व्यत्ययमिच्छति शास्त्रकृदेषां सोऽपि च सिध्यति बाहुलकेन ॥ ३.१.८५

सुसूक्ष्मजटकेशेन सुगजाजिनवाससा ।
समन्तशितिरन्ध्रेण द्वयोर्वृत्तो न सिध्यति ॥ २.२.२३

सैष दाशरथी रामः सैष राजा युधिष्ठिरः ।
सैष कर्णो महात्यागी सैष भीमो महाबलः ॥ ६.१.१३४

हरिद्रुरेषां प्रथमस्ततश्छगलितुम्बुरू ।
उलपेन चतुर्थेन कालापकमिहोच्यते ॥१
आलम्बिश्चरकः प्राचां पलङ्गकमलावुभौ ।
ऋचाभारुणिताण्ड्याश्च मध्यमीयास्त्रयोऽपरे ॥२
श्यामायन उदीच्येषु उक्तः कठकलापिनोः ॥३ ४.३.१०४

—:०:—

## SANSKRIT ACADEMY

Osmania University, Hyderabad-7

### LIST OF PUBLICATIONS

| | | | Price |
|---|---|---|---|
| 1. | Jnanachaturvimsi | 1956 | Rs. 2-00 |
| 2. | Panditarajakavyasangraha* | 1958 | Rs. 13-35 |
| 3. | Rigarthasara Part I | 1959 | Rs. 4-00 |
| 4. | Stories from the Kathasaritsagara Part I | 1960 | Rs. 2-70 |
| 5. | Gems from Skt. Literature (2nd Edn.) | 1979 | Rs. 2-00 |
| 6. | Samskrita Kavijivitam Part I* | 1961 | Rs. 6-00 |
| 7. | Minor Works of Kshemendra* | 1961 | Rs. 21-35 |
| 8. | Narakasuravijayavyayoga | 1961 | Rs. 4-00 |
| 9. | Sitaramavihara Kavya | 1962 | Rs. 5-35 |
| 10. | Danoddyota Part I | 1964 | Rs. 8-65 |
| 11. | Catalogue of Skt. Mss. in O.U. Library | 1964 | Rs. 40-00 |
| 12. | Stories from Kathasaritsagara Part II | 1965 | Rs. 6-70 |
| 13. | Aryasaptasati | 1966 | Rs, 11-35 |
| 14. | Vikramorvasiyam | 1966 | Rs. 10-70 |
| 15. | Danoddyota Part II | 1966 | Rs. 11-35 |
| 16. | Do Part III | 1967 | Rs. 16-65 |
| 17. | Kasika Part I | 1969 | Rs. 25-00 |
| 18. | Vrittaratnakara | 1969 | Rs. 16-00 |
| 19. | Gitagovinda* | 1969 | Rs. 18-70 |
| 20. | Kasika Part II | 1970 | Rs. 30-00 |
| 21. | Sahityaratnakara Part I | 1972 | Rs. 17-35 |
| 22. | Do Part II | 1974 | Rs. 17-35 |
| 23. | Kasika Part III (Indices) Vol. I | 1976 | Rs. 25-00 |
| 24. | Sahityaratnakara Part III | 1981 | Rs. 28-00 |
| 25. | Padamanjari Part I | 1981 | Rs. 25-00 |
| 26. | Do Part II | 1981 | Rs. 25-00 |
| 27. | Journal of Skt. Academy Vol. I | 1979 | Rs. 15-00 |
| 28. | Do Vol. II | 1980 | Rs. 15-00 |
| 29. | Koundinya Siksha | 1980 | Rs. 1-00 |
| 30. | Journal of Skt. Academy Vol III | 1981 | Rs. 15-00 |
| 31. | Do Vol. IV | 1982 | Rs. 15-00 |
| 32. | Samskrita Kavijivitam Part II | 1982 | Rs. 28-00 |
| 33. | Sangitachandra | 1982 | Rs. 28-00 |
| 34. | Kriya Svara Lakshanam | 1983 | Rs. 25-00 |
| 35. | Parasika Lokoktayah | 1983 | Rs. 10-00 |
| 36. | Journal of Skt. Academy Vol. V | 1983 | Rs. 15-00 |
| 37. | Minor Works of Neelakantha Deekshita | 1984 | Rs. 15-00 |
| 38. | Journal of Skt. Academy Vol. VI | 1984 | Rs. 15-00 |

* Out of Print